शोधपत्रसारांशिका

# संस्कृते भारतीयकलायाः सौन्दर्यस्य च तत्त्वम्

# CONCEPTS OF INDIAN ART AND AESTHETICS IN SANSKRIT

## अन्ताराष्ट्रियशोधसङ्गोष्ठी

(26 से 28 सितम्बर, 2015)




॥ सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥

**संस्कृतविभागः**
कलासंकायः
काशीहिन्दूविश्वविद्यालयः
वाराणसी

शोधपत्रसारांशिका

5.5

# संस्कृते भारतीयकलायाः सौन्दर्यस्य च तत्त्वम्

# CONCEPTS OF INDIAN ART AND AESTHETICS IN SANSKRIT

अन्ताराष्ट्रियशोधसङ्गोष्ठी

(26 से 28 सितम्बर, 2015)




॥ सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥

संस्कृतविभागः

कलासंकायः

काशीहिन्दूविश्वविद्यालयः

वाराणसी - 221 005

# संस्कृते भारतीयकलायाः सौन्दर्यस्य च तत्त्वम्
## CONCEPTS OF INDIAN ARTS AND AESTHETICS IN SANSKRIT

काशीहिन्दूविश्वविद्यालयस्य संस्थापनायाः
शताब्दपूर्तिमुपलक्ष्य
समायोजिताया अन्ताराष्ट्रियशोधसङ्गोष्ठ्याः

## शोधपत्रसारांशिका

प्रकाशकः
विभागाध्यक्षः,
संस्कृतविभागः,कलासङ्कायः,
काशीहिन्दूविश्वविद्यालयः

सम्पादनसंयोजकाः
प्रो0 गोपबन्धुमिश्रः, विभागाध्यक्षः
प्रो0 मनुलताशर्मा
प्रो0 सदाशिवकुमारद्विवेदी

प्रकाशनतिथिः
भाद्रपदशुक्लत्रयोदशी, संवत् 2072
26 सितम्बर, 2015

मुद्रकः
श्रीजीप्रिण्टर्स
नाटीइमली,
वाराणसी

न त्वहं कामये राज्यं न स्वर्गं नाऽपुनर्भवम् ।
कामये दुःखतप्तानां प्राणिनामार्तिनाशनम् ॥



# पं. मदन मोहन मालवीय जी

**संस्थापक : काशी हिन्दू विश्वविद्यालय**

**आविर्भावः वि. सं. 1918 पौषकृष्ण 8 ( 25-12-1861 )**
**तिरोभावः वि. सं. 2003 मार्गशीर्षकृष्ण 4 ( 12-11-1946 )**



# शोधपत्रसारांशिकाप्रकाशनम्

सौजन्यम्

श्रीजयेन्द्रसरस्वतीवेदवेदान्तसंस्कृतशिक्षासंस्थानम्

एवं च

श्रीजयेन्द्रसरस्वतीवेदपाठशाला, चित्रकूटम्

काशी हिन्दू विश्वविद्यालय
BANARAS HINDU UNIVERSITY
An Institution of National Importance established by an Act of Parliament

प्रो. गिरीश चन्द्र त्रिपाठी
कुलपति
Prof. Girish Chandra Tripathi
Vice-Chancellor

Varanasi-221005 (INDIA)
Phone : 91-542-2368938, 2368339
Fax : 91-542-2369100, 2369951
E-mail : vc@bhu.ac.in
Website: www.bhu.ac.in



सितम्बर ८, २०१५

## शुभाशंसा

काशीहिन्दूविश्वविद्यालयस्य कलासंकायान्तर्गतस्य संस्कृतविभागस्य पक्षतो विश्वविद्यालयस्यास्मिन् गरिममये शताब्दपूर्त्यवसरे 'संस्कृते भारतीयकलायाः सौन्दर्यस्य च तत्त्वम्' इति विषयमाश्रित्य २६-२८ सितम्बर, २०१५ दिनाङ्केषु समायोजयिष्यमाणां दिवसत्रयात्मिकाम् अन्ताराष्ट्रियशोधसंगोष्ठीं विज्ञाय परमं मोदमनुभवामि। अवसरेऽस्मिन् शोधपत्रसारांशिकापि प्रकाश्यमानाऽस्तीति प्रसन्नताया विषयः।

साहित्यसंगीतकलाविहीनो मनुष्यः साक्षात् पुच्छविषाणहीनः पशुरिवास्तीति भर्तृहरिर्भणति। कलायाः पुष्टिः सौन्दर्याभिव्यञ्जनेन अनुभवेन च भवति। संस्कृते वैदिकवाङ्मयत आरभ्याधुनिककालं यावत् उपनिषत्-पुराण-विविधदर्शनशास्त्रादिषु तथा च काव्यनाटकादिषु भारतीयायाः कलाया यानि रूपाणि तद्गतानि यानि वैशिष्ट्यानि च सन्निहितानि सन्ति, किं च तत्तत्स्थलेषु सूक्ष्मसौन्दर्याभिनिवेशस्य यादृशं कान्तकोमलोदात्तमुपस्थापनं विद्यते तदनवद्यमेव। संगोष्ठ्यामेते विषया विमृष्टा भूत्वा विश्वस्य पुरतो नवनीतमिव किञ्चिद् विशिष्टं प्रस्तोष्यते इति मे विश्वासः।

संगोष्ठ्यामस्यां भागग्रहीतृणां भारतीयानां वैदेशिकानां विदुषां प्राध्यापकानां शोधच्छात्राणां च स्वागतं व्याहरामि। संगोष्ठ्या आयोजनस्य कृते तथा च शोधपत्रसारांशिकायाः कृते यत्नं विदधते संस्कृतविभागपरिवाराय साधुवादं वितरामि, संगोष्ठ्याः पूर्णं साफल्यं च कामये।

(गिरीश चन्द्र त्रिपाठी)

प्रो0 बिश्वनाथभट्टाचार्यः
अध्यक्षचरः,
संस्कृतविभागः,
काशीहिन्दूविश्वविद्यालयः, वाराणसी

दिनांकः - 08.09.2015

## शुभाशंसनम्

शुभं कर्म शुभाशंसनं नापेक्षते। तथापि गुरुजनानुरोधः न कदाप्युल्लङ्घितपूर्व इति कृत्वा संस्कृतविभागेन समायोजयिष्यमाणाया अन्ताराष्ट्रियायाः त्रिदिवसव्यापिन्याः सङ्गोष्ठ्याः साफल्यं शुभायतीं च कामयामहे।

बहुशः श्रुतमस्माभिः **'वादे वादे जायते तत्त्वबोधः'** इति। तत्त्वं हि नाम अनारोपितं रूपम्। वस्तुविशेषस्य विषयविशेषस्य वा यद्वास्तविकं तथ्यात्मकं स्वरूपं तस्य निरूपणं कर्तुकामा विद्वांसः प्रयतन्ते। तादृशे विचारप्रवाहे जिज्ञासया निवृत्तिकामा विद्वज्जना अध्येतृवर्गश्च यत्प्रयासं कुर्वन्ति तदर्थं विभागोऽयं सन्नद्धो भूत्वा प्रयतते इति नितरां प्रमोदस्थानमेतत्। सौन्दर्यतत्त्वस्य कलानां च निरूपणाय वादोऽयं प्रवर्तिष्यते। तदर्थं सर्वेषां भागग्राहिणां विदुषां स्वागतं समुच्चारयामः। प्रयासोऽयं ज्ञानस्य नवीनं दिगन्तमुन्मोचयिष्यति इत्यस्माकं मनीषा। एतद्विषये वैदिकं वाक्यम्– **'सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै'**– इत्युद्घोष्य सङ्गोष्ठ्याः सर्वात्मकं साफल्यं आशंसामहे। ज्ञानं कदापि स्वार्थपरं न भवति इति विद्वांसः जानन्त्येव। अस्मादेव कारणात् प्राचीनैः केवलं ज्ञानमेव न प्रार्थितमपि तु ज्ञानेन समं वैराग्यस्य संयोजनमपि कृतम्। ज्ञानवैराग्यसिद्ध्यर्थं सर्वेषां प्रयत्नः फलेग्रहिः स्यात् इति सम्प्रार्थ्य संस्कृतविभागं तत्रत्यान् विदुषः विद्यार्थिनश्च शुभाशंसनेन वर्धयामहे इत्थं प्रार्थयति ।

विदुषामनुचरः

भट्टाचार्योपाधिको बिश्वनाथदेवशर्मा

निवासः –
29, उपेन्द्रनगर, दुर्गाकुण्ड,
वाराणसी – 221005
0542–2310416

**प्रो0 रेवाप्रसाद द्विवेदी 'सनातन'**
पूर्वसङ्कायप्रमुखः साहित्यविभागाध्यक्षश्च
संस्कृतविद्याधर्मविज्ञानसङ्कायः,
काशीहिन्दूविश्वविद्यालयः, वाराणसी

निवास : 28महामनापुरी,
पोस्ट काहिविवि,
वाराणसी 221 005
0542–2570682

# सन्देशः

'काशीविश्वविद्यालय' नाम्ना काशीनाम्नि धाम्नि संस्थापितस्यास्य काशीहिन्दूविश्वविद्यालयस्य उद्देश्येषु प्रथमतां धत्ते सनातनधर्मसम्बन्धिनां वेदवेदाङ्गानां परिवर्धनमेव । संस्कृतवागेव तेषां निधानमिति तस्याः संरक्षणमप्यभ्यर्हितम् । एतदुद्देश्यमिदानीमपि श्वसिति। संस्कृतविदुषां सम्मेलनमिदं तत्र प्रमाणम् । अत्र आङ्ग्लभाषायाः का कथा, हिन्दीभाषाऽनभिज्ञा अपि बहवो विद्वांसस्तत्तेषु पदेषु नियुक्ता आसन्, सन्ति चाद्यापि । अत एव संस्कृतस्य विश्वभाषात्वम् । स्मरणीयोऽत्र प्राचीनो मन्त्रः 'योऽनूचानः स नो महान्' इति, 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' इति च ।

माता संस्कृतभारती विजयते यद्वर्णमालागतं
प्रत्येकं घटकं विराजतितरां दिव्येन मन्त्रात्मना ।
वेदा यत् समुपासते मधुकरा यद्वन्मधुच्छत्रकं
वल्मीकस्य कणाश्च यत्र कवितामूर्त्तिं भजन्तेतराम् ।।

—काश्यपस्य द्विवेदिनो रेवाप्रसादस्य सनातनस्य
सम्मानितप्राध्यापकः (Emeritus Professor)
संस्कृतविद्याधर्मविज्ञानसङ्कायः
काशीहिन्दूविश्वविद्यालयः

दिनांक : 06.09.2015

अध्यक्ष-

## श्री काशी विद्वत् परिषद्, वाराणसी



महामहोपाध्यायः राष्ट्रपतिपुरस्कृतोऽभिनवपाणिनिश्च

**प्रो० रामयत्न शुक्लः**

(भूतपूर्व संकायाध्यक्ष एवं व्याकरणविभागाध्यक्ष, सं.सं.वि.वि.,वाराणसी)

---

पत्रांक ........ दिनांक.....................

### शुभाशंसनम्

अस्माकं देशः स्वस्यैतिह्येन विशिष्टया संस्कृत्या च सम्पूर्णे विश्वे गौरवमातनुते। देशस्यास्य ख्यातिः सृष्टेरादिमकालादेव सर्वविदिता सुप्रसिद्धा विद्यते। देशेऽस्मिन् बहुषु कलासाहित्यादि विषयानाश्रित्य प्रसिद्धेषु स्थलेषु काशी सुतरां सर्वानतिशेते। काश्यां पवित्राणि तीर्थस्थलानि, शास्त्राध्ययनाध्यापनतत्पराः विद्वांसः, पूततोया भागीरथीत्यादीनां महत्त्वं प्रसिद्धिश्च सर्वैरवगम्यते एव। तत्र च भारतरत्नेन महामनसा पण्डितमदनमोहनमालवीयेन संस्थापितः 'काशीहिन्दूविश्वविद्यालयः' सम्पूर्णेऽपि विश्वे परमां ख्यातिमधिरूढो विद्यते। विश्वविद्यालयेऽस्मिन् निखिलेषु सङ्कायेषु कलासङ्कायस्य महत्त्वपूर्णं स्थानमस्ति, तस्मिन् कलासङ्काये विद्यमानः संस्कृतविभागः सद्यः विश्वविद्यालयस्य शताब्दीपूर्त्या सह स्वस्यापि गौरवमयीं शताब्दीं पूरयन् अग्रेसरोऽस्ति। विभागेऽस्मिन् महामहोपाध्यायपण्डितरामावतारशर्मतुल्याः विद्वांसः प्रो. सत्यव्रतशास्त्रितुल्याश्छात्रा विभागमिमं स्वशास्त्रज्ञानेन विभूषयन्त आसन्। वर्तमानकाले सुयोग्यैः अध्यापकैः शोभितोऽयं विभागः नवीनान् किन्तु प्रौढान् कार्यक्रमान् प्रस्तौति, 2013 तमे वर्षे तत्कालीनविभागाध्यक्षया प्रो०मनुलताशर्मणा स्वातन्त्र्योत्तरसंस्कृतरचनाधर्मिता विषयमाश्रित्य राष्ट्रियशोधसङ्गोष्ठी समायोजिता आसीत्। ऐषमः सितम्बरमासे वर्तमानविभागाध्यक्षेण प्रो०गोपबन्धुमिश्रेण 'संस्कृते भारतीयकलायां सौन्दर्यस्य च तत्त्वम्' इति विषयमाश्रित्य अन्ताराष्ट्रियशोधसङ्गोष्ठी समायोक्ष्यते। गोष्ठ्यामस्यां देशेभ्यः विदेशेभ्यश्च समागच्छन्तो विद्वांसः संस्कृतकाव्येषु शास्त्रेषु च कलायाः सौन्दर्यस्य च तत्त्वानि यथा विमृष्टानि तथा सुयोग्यं विवेचनं विधास्यन्तीति परमस्य हर्षस्यायं विषयो वर्तते। संगोष्ठ्यवसरेऽस्मिन् पठिष्यमाणानां शोधपत्राणामियं या सारांशिका प्रकाश्यमाना तदर्थं ये संगोष्ठ्यां प्रतिभागिनः विद्वांसः सन्ति ते साधुवादार्हाः तथा च संस्कृतविभागस्य सर्वेऽपि सदस्याः सुतरामभिनन्दनीयाः सन्ति।

अयं कार्यक्रमः लोकोत्तरं साफल्यं प्राप्नुयात् एतस्मिन् कार्यक्रमे ये ये सहयोगिनः प्रवर्तिता विशेषतः सम्बद्धाः ते अवश्यं महद्यशः प्राप्नुयुः, अत्र प्रतिभागिनः छात्राः, विशिष्टाः प्राध्यापकाः सर्वेऽपि महद्यशः महत्साफल्यं च प्राप्नुयुरिति परमेश्वरसाम्बसदाशिवं मुहुर्मुहुः प्रार्थयते।

रामयत्न शुक्लः

रामयत्नशुक्लः

गर्गाश्रमः
शङ्कुलधारापोखरा
वाराणसी– 221010

---

पता- 'गर्गाश्रम' बी-22/159-2, शंकुलधारा, वाराणसी • मो0- 9793285989

**प्रो0 वशिष्ठ त्रिपाठी**
राष्ट्रपतिसम्मानः, विश्वभारतीसम्मानः, वाल्मीकिसम्मानः,
आचार्यः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः(से.नि.)
(लब्धस्वर्णपदकः)
भूतपूर्वविभागाध्यक्षः, न्याय-वैशेषिकविभागः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी 221005

निवासः— बी. 30/252,
रघुनाथ आश्रम, नगवा,
लंका वाराणसी,
9889222270, 7860009988

## शुभाशंसनम्

काशीहिन्दूविश्वविद्यालयीय-कलासङ्कायान्तर्गत-संस्कृतविभागेन **संस्कृते भारतीयकलायाः सौन्दर्यस्य च तत्त्वमिति** विचारार्थविषयमुररीकृत्य सञ्चालयिष्यमाणायाः त्रिदिवसीयान्ताराष्ट्रियशोधसङ्गोष्ठ्याः पूर्वपीठिकारूपेण कार्यक्रमे प्रस्तोष्यमाण–शोधप्रबन्धानां **'सारांशिकासंग्रहः'** प्रकाश्यमानोऽस्तीति विज्ञाय अतितरां मोमुद्यते मे मानसम्।

संस्कृतविद्यायाः जगद्विख्याता प्रतिष्ठाभूमिः काशी, महामनसामवदानेन तपसा च तत्र संस्थापितो हिन्दूविश्वविद्यालयः। अतस्तदीयसंस्कृतविभागेन सर्वथा युक्ततरमेव संकल्प्यते इत्यत्र नास्ति कश्चिच्छङ्कापङ्ककलङ्कक्लेशः।

**'सत्यं शिवं सुन्दरम्'** इत्यस्य कामना वैदिकदर्शनजगति आरम्भकालादेव परिस्फुटरूपेण दृश्यते। परमप्रेमास्पदस्य आत्मनो यत् निरतिशयं अनितरसाधारणं वा सौन्दर्यं तस्यैव प्रतिस्पन्दो भारतीयवाङ्मयक्षेत्रे स्थापत्यादिकलासु च दरीदृश्यते। अतः भारतीयवाङ्मये सौन्दर्यान्वेषणम् अन्तत आत्मसौन्दर्यस्य जागरणे एव पर्यवस्यतीति दार्शनिकानां विश्वासः। सौन्दर्यचिन्तने अन्तःसौन्दर्यस्य अभिव्यक्तिरेव भारतीयसौन्दर्यशास्त्रस्य आधुनिकसौन्दर्य– चिन्तनापेक्षया वैशिष्ट्यमस्ति। संस्कृतविभागः स्वकर्मणि सिद्धिं विन्दताम्। अन्ते च कार्यक्रमस्यास्य संयोजकेभ्यो गोपबन्धुमिश्रेभ्यः आयोजनसमितेरध्यक्षेभ्यः श्रीकिशोरमिश्रेभ्यः सहसंयोजिकायै मनुलतायै च भूयोभूयः शुभाशंसनम्।

विदुषां वशंवदः,
[signature]
**(वशिष्ठत्रिपाठी)**

**दिनांक : 07.09.2015**

**प्रो0 जयशङ्करलालत्रिपाठी**
एम.ए., आचार्यः (लब्धस्वर्णपदकः),
पी-एच्0डी0, डी0लिट्0
राष्ट्रपति-सम्मानितः,
भूतपूर्व अध्यक्षः (से.नि.)
संस्कृतविभागः, कलासङ्कायः
काशीहिन्दूविश्वविद्यालयः
वाराणसी 221005
9935519720

दिनांक : 07.09.2015

## शुभाशंसनम्

काशीहिन्दूविश्वविद्यालययीयेन कलासंकायान्तर्गतेन संस्कृतविभागेन 2015 वर्षीये सितम्बरमासे 26–28 तालिकासु 'संस्कृते भारतीयकलायाः सौन्दर्यस्य च तत्त्वमिति' विषयमाश्रित्यायोजयिष्यमाणायामन्ताराष्ट्रियशोधसङ्गोष्ठ्यां प्रतिभागिभिर्विद्वद्भि–रुपस्थापयिष्यमाणानां सार्धचतुश्शतशोधपत्राणां 'सारांशिकासङ्ग्रहः' शीघ्रमेव प्रकाशयिष्माणोऽस्तीति ज्ञात्वा जिज्ञासया च काँश्चित् सारांशानवलोक्यामोमुदीन्मे मनः। अनयां सङ्गोष्ठ्यास्य संग्रहस्य च प्रकाशनेन संस्कृतज्ञा अपरे च विद्वांसो विपुलतमे संस्कृतवाङ्मये समुपवर्णितानां सकलकलानां सौन्दर्यस्य च तत्त्वस्य विषये वैशद्येन ज्ञातुं प्रभविष्यन्ति।

अस्यान्त्यन्तोपयोगिनः ''सङ्ग्रहस्य' हृदयहारिप्रकाशनार्थं संस्कृतविभागस्य सर्वान् विदुषो विशेषतोऽध्यक्षपदमलङ्कुर्वाणानार्यान् प्रोफेसरगोपबन्धुमिश्रमहोदयान् हृदयेनाभिनन्दामि।

विदुषामनुचरः

जयशङ्करलालत्रिपाठी



# काशीहिन्दूविश्वविद्यालयः


## संस्कृतविभागः, कलासङ्कायः

## वाराणसी 221005


---

## सम्पादकीयम्

कमलं सरसि शोभते। कमलदलानि एकैकशः सुसज्जितानि परस्परं सन्नद्धानि वर्णमयानि भवन्ति। तद्गतः परागो मधुकरान् आकर्षति। कमलगतमिदं कलात्मकं रचनावैभवं नैसर्गिकमेव, किन्तु तस्मिन् कलात्मकतनुसंघटनविधावेव ईश्वरस्यास्याः सृष्टेः परिनिष्ठितता पर्यवसितता वा नास्ति। कमलगतमाङ्गिकं सौष्ठवमतिरिच्य किमपि विशिष्टं तत्त्वं तत्र सन्निहितं विद्यते येन तत् कमलं रम्यं रमणीयं कमनीयं सुन्दरं वा प्रथीयते। तदेव तत्त्वं परिलक्ष्य महाकविः कालिदासो भणति– **सरसिजमनुविद्धं शैवलेनापि रम्यम्** (अभिज्ञानशाकुन्तलम्) इति। सरसिजतनुगतनिसर्गनिर्मितिः तत्पार्श्वगतावान्तरशैवलपरिगतापि कामपि विशिष्टां रम्यतां तनुते। अत एव **'वारिजाक्षं भजे'** इति अच्युतस्तुतिः प्रथते, लक्ष्मीः पद्मालया पद्मा वेति स्तूयते, सरस्वती श्वेतपद्मासनेति गीयते, कुमारसम्भवे पार्वती सुवर्णकमलेन सहोपमीयते –

**'ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदुं प्रकृत्या च संसारमेव च'** (कुमारसम्भवम् 5.19)।

सर्वेष्वेतेषु प्रसङ्गेषु निर्मितिकला स्वगतं सूक्ष्मम् अतीन्द्रियं सौन्दर्यम् अभिव्यञ्जयति। कला इन्द्रियग्राह्या, किन्तु सौन्दर्यमनुभूतिगम्यमेव भवति। कलया सुखम्, अथ च सौन्दर्येण मङ्गलं वितन्यते। कला वैभवशालिनी भवति, अथ च सौन्दर्यम्, आह्लादकरं भवति। कलात्मकप्रस्तुतिप्रसङ्गे प्रस्तुतविषयगता वर्णनिष्ठा आकारादिनिष्ठा वा भेदा भवितुमर्हन्ति, तत्र द्वैधीभावः प्रवर्तितुं शक्नोति, किन्तु सौन्दर्यम् अद्वन्द्वम् अद्वैतं ह्रद्यं वा भवति। अतो भगवतः शिवस्य स्तुतौ –

**नमः शम्भवाय च मयोभवाय च;**

**नमः शङ्कराय च, मयस्कराय च;**

**नमः शिवाय च शिवतराय च।**

इति प्रयोगद्वैविध्यं विमृश्य विश्वकविः रवीन्द्रनाथठाकुरः परामृशति यदत्र **'यः सुखकरः तस्मै नमः, यो मङ्गलकरस्तस्मा अपि नमः'** (शान्तिनिकेतन, रवीन्द्ररचनावली 4)

एवंविधं कला–सौन्दर्याभिधं तत्त्वद्वयं संस्कृते वेदादिशास्त्रेषु रामायणमहाभारतादिषु काव्येतिहासपुराणादिष्वखिलेषु नानाविधैरूपायैः परामृष्टं विद्यते। एषु सौन्दर्यमविहाय कला प्रवर्तते, कलयैव सौन्दर्यं पुष्टिमश्नुते। विविधैः प्राच्यैः पाश्चात्यैश्च काव्यशास्त्रतत्त्वविद्भिः एतत्तत्त्वद्वयं बहुधा विमृष्टं विमृश्यमानं च विद्यत एव। काशीहिन्दूविश्वविद्यालयस्य कलासङ्कायान्तर्भूतस्य संस्कृतविभागस्य पक्षतः 26–28 सितम्बर, 2015 दिनाङ्केषु **'संस्कृते भारतीयकलायाः सौन्दर्यस्य च तत्त्वम्'** इति विषयमधिकृत्य समायोज्यमानायां त्रिदिवसीयायाम् अन्ताराष्ट्रियशोधसङ्गोष्ठ्यां तदेव तत्त्वद्वयं विमर्शनीयम् अस्ति। अत्र उपपञ्चशतं भारतीया वैदेशिकाश्च विद्वांसः, अध्यापकाः, शोधच्छात्राश्च संस्कृत–हिन्दी–आङ्ग्लेति भाषास्वन्यतमया भाषया शोधपत्राणि प्रस्तोष्यन्ति, तेषां समीक्षाऽपि तत्तत्सत्रेषु विधास्यत इति महानयं प्रमोदावहोऽवसरः। अवसरेऽस्मिन् प्रस्तोष्यमाणानां शोधपत्राणां सारांशिकेयं प्राकाश्यमायातीति विशिष्टोऽयं सन्तोषविषयः।

सारांशिकायामस्यां येषां प्रस्तुतशोधसङ्गोष्ठीप्रतिभागिनां विदुषाम् अध्यापकानां शोधच्छात्राणाञ्च सारांशिकाः शोधपत्रसारांशिकायां स्थानं लभन्ते तेषां कृते कृतज्ञतां विज्ञापयामि। समयेनैव स्वस्य शोधपत्रसारांशिकाया अपेक्षितां 'साफ्टप्रतिकृतिं' सम्प्रेष्य सारांशिकासङ्ग्रहमेतं सम्पोषितवन्त इति तेषां निकटे आधमर्ण्यं मे निवेदयामि। प्राप्तासु सारांशिकासु तासां सम्पादनं संशोधनञ्च महता प्रयासेनानुपमया निष्ठया च कृतवतां विभागीय-प्राध्यापकानां प्रोफेसरश्रीकिशोरमिश्र-प्रोफेसरमनुलताशर्म-प्रोफेसरसदाशिवकुमारद्विवेदि-महोदयानां कृते साधुवादान् समर्पयामि, विशेषतः प्रोफेसरसदाशिवकुमारद्विवेदिभिः, श्रीबिमलेश-कौशलेन्द्र-अभिनीत-सर्वेशशाण्डिल्य-आशीषकुमार-अरुण-चतुर्वेदी-श्यामबाबू-मनोजशर्मा-रमाशङ्करादिभिः विभागीयैः शोधच्छात्रैः स्वाती-सञ्जीवनी-संगीता-आर्यादिभिः शोधच्छात्राभिः यादृशौ श्रमो यत्नश्च साधितौ तदर्थं भूयो भूयस्ते धन्यवादार्हा एव। एते शोधच्छात्रा अपि सुतरां शुभाशीर्भिः वर्धापनीयास्सन्ति।

काशीहिन्दूविश्वविद्यालयस्य कुलपतिपदमलङ्कुर्वद्भिः प्रो0गिरीशचन्द्रत्रिपाठिमहाभागैः स्वाशीर्वचोभिः शोधपत्रसारांशिकेयमलङ्कृता इति तान् प्रति हार्दिकीं कृतज्ञतां विज्ञापयामि। सारांशिकासङ्ग्रहस्यास्य प्रकाशनकर्मणि पूर्णमार्थिकसाहाय्यं वितन्वते श्रीकामकोटिपीठाधीश्वराणां जगद्गुरुश्रीजयेन्द्रसरस्वतीपादानां जगद्गुरुशङ्कराचार्याणां श्रीशङ्करविजयेन्द्रसरस्वतीपादानां चानुग्रहभाजनाय श्रीमते वी0एस0सुब्रह्मण्यम्मणिमहोदयाय (काशीस्थकाञ्चीमठप्रबन्धकाय) धन्यवादान् विज्ञापयामि। सारांशिकासंग्रहममुं शुभाशंसावचनैः अलङ्कुर्वद्भ्यः काश्यामस्यां सुरभारत्याः अलङ्करणभूतेभ्यः आचार्यविश्वनाथभट्टाचार्य-आचार्यरामयत्नशुक्ल-आचार्यरेवाप्रसादद्विवेदि-आचार्य-वशिष्ठत्रिपाठि-आचार्यजयशङ्करलालत्रिपाठिमहाभागेभ्यः हार्दिकीं कृतज्ञतां विज्ञापयामि।

कलां कलयते कालः, कला तनोति सौन्दर्यम्। कालातीतः भगवान् शङ्करः सर्वथा भवान्यान्वितः अर्धनारीश्वररूपेण गीयते स्तूयते च। स नटराजोऽपि शिवः शिवतरश्चेति उभयोः कलासौन्दर्ययोरधिष्ठानं शंकर एव। सोऽयं वाराणसीपुरपतिः साम्बः विश्वनाथः कलां कलयतात्, सौन्दर्यं च पोषयतादिति अभ्यर्थ्य विरम्यते।

गोपबन्धुमिश्रः

(गोपबन्धुमिश्रः)

विभागाध्यक्षः

दिनाङ्कः -

भाद्रपदशुक्लत्रयोदशी, संवत् 2072
26सितम्बर, 2015

**प्रो० रेवाप्रसाद द्विवेदी 'सनातन'**
पूर्वसङ्कायप्रमुखः साहित्यविभागाध्यक्षश्च
संस्कृतविद्याधर्मविज्ञानसङ्कायः,
काशीहिन्दूविश्वविद्यालयः, वाराणसी

निवास : 28 महामनापुरी,
पोस्ट काहिविवि,
वाराणसी 221 005
0542–2570682
9793523523

## स्वागतम्

यद्वै संस्कृतभारतीबुधवराणां मेलनं जाघटी–
त्यस्मिन् सर्वपुमर्थबोधमहिते तीर्थोत्तमे साम्प्रतम् ।
तस्मिन् ये समुपस्थिताः कविवराः प्रज्ञावधूवल्लभा–
स्तेषां स्वागतम्, अस्तु तेषु भगवान् काशीपतिः सस्मितः ।।

सर्वे गोपा वयमिह मुदा सङ्गताः, कस्य हेतो–
र्यस्माद् बन्धुर्विलसतितरामत्र धाम्नि स्वकीयः ।
विद्या नैका सह कवितया यत्र राजन्ति, यस्मिन्
प्रीतेः सिन्धौ विनयमसृणो लालसीत्यार्जवेन्दुः ।।

–काश्यपस्य द्विवेदिनो रेवाप्रसादस्य सनातनस्य
सम्मानितप्राध्यापकः (Emeritus Professor)
संस्कृतविद्याधर्मविज्ञानसङ्कायः
काशीहिन्दूविश्वविद्यालयः

# 1. कलासौन्दर्यविमर्शदृष्टिः

प्रो0 अभिराजराजेन्द्रमिश्रः
पूर्वकुलपतिः, सम्पूर्णानन्दविश्वविद्यालयः, वाराणसी

रूपं, सौन्दर्यं कला चेति सर्वमपि सजातीयमपि तत्त्वमित्यत्र न काऽपि संशीतिः। यद्यपि सौन्दर्यशास्त्रनामा कश्चिद् विषयः ऊनविंशतिशततमे खिस्ताब्दे लब्धजनिस्सम्प्रति AESTHETICS नाम्ना ख्यातेः पराकाष्ठामधिरोहति पश्चात्तो जहति, तदनुकारिणि **पौरस्त्येऽपि विश्ने**। तथापि पारमार्थिकसत्यमिदमेव यत् भारतवर्षे तत्त्वमिदं शाश्वतं सनातनञ्च वर्तते। वेदमन्त्रेष्वपि प्राकट्यमस्य परिलक्ष्यते। उषस्सूक्ते **सूर्यासोमविवाहसूक्ते** च सौन्दर्यतत्त्वस्य यादृक् चित्रणं तद्विलक्षणमेव प्रतीयते। समानो मन्त्रः समितिः समानीति कथयन् समाना हृदयानि व इति च समुदाहरन् ऋषिर्यदाभ्यन्तरसौन्दर्यस्य चर्चां करोति तद्बाह्यसौन्दर्यानुभवैकज्ञानपर्यवसितानां पश्चात्त्यविदुषां कृतेऽद्यापि रहस्यमेव। शरीरस्य सैन्दर्यन्तु सर्वोऽपि निरीक्षित एव। परन्तु मनसस्सौन्दर्यं को नु निरीक्षते? हृदयस्य सौन्दर्यं को नु निरीक्षते? दैनन्दिनव्यवहारस्य वाऽपि सौन्दर्यं को नु निरीक्षते? परन्तु भारतीयसंस्कृतौ तत्सूक्ष्मनिरीक्षणस्यापि सन्दृश्यते काऽपि साधीयसी परम्परा। यदा मार्कण्डेयपुराणे समुध्यते–

**पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीं।**
**तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम्।।**

तदत्र मनोरमाशब्देन किमभिधातुं प्रयत्यते। मनोरतणक्षमं सौन्दर्यं किन्नाम? किं विविधशरीरावयवसंघटनासौष्ठवजन्यं रूपनाम्ना ख्यातमेव सौन्दर्यमेव तत्। उदात्तो वपुरवयवव्यतिरिक्तं विरलसहृदयजनानुभवैकमात्रगोचरं मनोहारिणबन्धनवागुराभूतं दर्शकात्यसात्करणक्षमं लावण्याऽपरनामधेयं सौन्दर्यातिरेकि किमप्यपरं तत्त्वं? सौन्दर्यवती भवति निश्चप्रचं गणिका, परन्तु कामं सा शरीरं शरीरेण रमयति न जातु मनसा शरीरेण वा मनः। एवं हि सौन्दर्यादभि गभीरं तत्त्वं किमपि परिज्ञातमासीत् भारतीयप्रेक्षावताम्। वस्तुतस्तदेव रागं जनयति। रागदीर्घिकायामेव सञ्जायते सौन्दर्यकमलम्। उभयोराधाराऽधेयसम्बन्धः। इदमेव रागजन्यसौन्दर्यं कलीभूय सुखयत्याह्लादयति लोकम्, न केवलम् मर्त्यलोकमपितु, समग्रमेव ब्रह्माण्डम्। तत्र देवदानवनागपितृचारणविद्याधरोऽप्सरः प्रभृति सर्वमपि लोकवृन्दमनुभवति। कं सुखं बाह्यमाभ्यान्तरमानन्दं लाति जनयति कला। एवं हि रागं मूलं सौन्दर्यं, सौन्दर्यमूला च कला। कला प्राणश्च समाजः।

रागसौन्दर्यकलात्रितय्यामेव पर्यवसितानि सर्वाणि शास्त्राणि। किञ्च चतुर्दश विद्यास्थानमेव त्रितय्या अस्या व्याख्यानमापर्यवसितं परिलक्ष्यते। यानि द्वादशदर्शनानि, यानि वा विविधशास्त्राणि तानि सर्वाणि स्वाभिमतस्तोताभिस्त्रितयीमिमां व्याख्यायन्ति, प्रत्यभिज्ञायन्ति, परन्तु तत्र कानिचिदेव प्रत्यक्षसम्बद्धानि मन्यन्ते, तद्यथा – नाट्यशास्त्रं, काव्यशास्त्रं, कामशास्त्रं, संगीतशास्त्रं वा। तत्रापि महीयते नाट्यशास्त्रं सर्वसृष्ट्यनुकरणक्षयत्वात् नाट्यशास्त्रं त्रिविधिमपि रागं, त्रिविधिमपि सौन्दर्यं, त्रिविधश्चापि कलाः प्रकाशयते सिद्धान्ततो व्यवहारतश्च। कास्ताः विधाः? मनो वाक्कायाख्याश्च ताः विधाः। मानसिको रागः, वाचिको रागः, व्यावहारिको (शारीरो रागः, तत्राऽपि भ्रकुटिजो रागः, अपाङ्गजो रागः, कानिनिको रागः, मुखजो रागः, चिबुकजो रागः, कपोलजो रागः, कण्ठजो रागः, बाहुजो रागः, जघनजो रागः नितम्बजो रागः इत्येवमनेके रागाः कल्पितुं शक्याः) स्थूलव्यापारस्तु शरीरेणैव सम्भवति। शरीरे चाप्यनेकाङ्गान्युपाङ्गानि भवन्त्येव। अत एव तज्जा रागाश्चाऽप्यनेके सम्भवन्त्येव।

रागवदेव सौन्दर्यस्य त्रैविध्यं कलायाश्चापि त्रैविध्यं सम्भवति। एतत्सर्वं न केनापि क्वचिल्लिखितम्। स्वाभिमतमात्रं मया प्रकाश्यते, परन्तु पद्धत्याऽनया विवेचितं सौन्दर्यशास्त्रं प्रचलितसौन्दर्यशास्त्रापेक्षया सर्वथा नूतनं विलक्षणञ्च भविष्यति। किञ्च, तत्सर्वं भविष्यति दिव्यमेव, देवमूलत्वात् सर्वसृष्टेः।

दुर्गासप्तशत्यां यदुक्तं सर्वा विद्याः भगवत्या अखिलब्रह्माण्डेश्वर्या एव अभिव्यक्तयस्तत्र न कापि संशीतिः। जगज्जनन्याः सौन्दर्यमीमांसायामेव सांसारिकमिदं स्थूलस्थूलं सौन्दर्यनिमग्नमिद परिलक्ष्यते। यथा पाथोधिमन्थनसमुत्थहालाहलबिन्द्वादानमात्रगर्विताः सर्पवृश्चिकादयो जीवाः तथैव सौन्दर्यविग्रहायाः मृडान्याः सौन्दर्यबिन्दुसमुच्छ्वसितमिदं मानवीयं सौन्दर्यशास्त्रम्।

# 2. वाल्मीकिरामायणे कलासौन्दर्यतत्त्वम्

प्रो0 उमाशंकर शर्मा 'ऋषिः' (पटना)
भूतपूर्वः अध्यक्षः संस्कृतविभागः, पटना विश्वविद्यालयः।

रामायणयुगे भारते सांस्कृतिकी चेतना प्रभूतासीत्। जनाः कलासु सौन्दर्यबोधे च निपुणा अभूवन्। तदानीं नगराणि सर्वाण्येव कलाकेन्द्राणि आसन्। अयोध्यायाः बालकाण्डस्य षष्ठसर्गे वर्णनेनानुमीयते यत् तत्रत्याः नराः नार्यश्च कलाभिज्ञाः सौन्दर्यप्रियाः सहृदयाश्चासन्। कलायाः साधना अनुष्ठानं वा क्रियते स्म, न तु

मनोविनोदसाधनत्वेन तस्याः प्रयोगः । कलाकाराः अभीष्टलाभाय भक्तिं योगं च साधनरूपेण प्रयुज्यते स्म, अत एव कलागतं सौन्दर्यं धार्मिकानुष्ठानेन सुरतीति तेषां विश्वासः। रामायणे चित्रकला, वास्तुकला, संगीतं, नाट्यकला, नृत्यं, स्थापत्यं चेति रूपाः सौन्दर्यान्विताः कलाः विविधेषु स्थलेषु सूच्यन्ते। तासां समासेन प्रस्तुतिरत्र विधीयते।

## 3. अप्रतिमसौन्दर्यमष्टाध्याय्याः

दीक्षितपुष्पा
संस्कृतप्राध्यापिका, शासकीयमहाविद्यालयः, विलासपुर

सर्वं खलु जगदिदं रसात्मकस्य परमात्मनः स्वरूपभूतमप्यनादिवासनाभिराक्रान्तेन चित्तेन न तथोपलभ्यते। चित्तस्य द्रुतिं विना वासनाविगलनं न संभवति, वासनाविगलनं विना च न सम्भवत्यात्मनः स्वरूपभूतस्य सौन्दर्यस्योपलब्धिः। सुपूर्वकाद् 'उन्दी क्लेदने' इति धातोः अरप्रत्यये निष्पन्नात् सुन्दरशब्दाद् भावे ष्यञि निष्पन्नं सौन्दर्यन्तु चित्तस्य द्रवीभाव एव। तच्चात्मनो धर्मः। स एवानन्दः, यल्लब्ध्वानन्दीभवति। तस्योपब्धावुपायद्वयम्। काव्यं शास्त्रं च। , काव्येनोपायेन जायमान आनन्दो विगलितपरिमितप्रमातृभावो वेद्यान्तरसम्पर्कशून्यो विभावादिजीवितावधिस्तिष्ठति, किन्तु शास्त्रोपायेन जायमानं चित्तस्य द्रुतिरूपं सौन्दर्यं तु विचारसरणिमास्थाय जीवनस्य दर्शनमेव विपरिणमयति। शास्त्राणां प्रयोजनमेवास्ति क्रमेण बुद्धेः सूक्ष्मतापादनं, येन तत्र जायते स्वरूपावबोधयोग्यत्वम्, यतः सूक्ष्मयैव बुद्ध्या तत्त्वसाक्षात्कारः संभवति 'दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः' इति श्रुतेः।

शास्त्रेषु च मूर्धन्यं वर्तते व्याकरणं पाणिनीयम्, यत्कृते भगवता पाणिनिना महति समाधियोग आस्थाय निखिलशब्दराशेः प्रत्यक्षमेककलावच्छेदेन कृतम्। अतश्च नभस्यादित्यं परितो ग्रहाः इव बम्भ्रमीति निखिलो वैदिको लौकिकश्च शब्दराशिः पाणिन्यष्टाध्यायीं परितः। नात्र किमपि रिष्यति। अत्राष्टस्वध्यायेषु विभक्तानि सूत्राणि शब्दस्यान्तः प्रविश्य, प्रकृतिं प्रत्ययं च विभज्य, तत्रत्यं सर्वं प्रकाशयन्ति। एतत् सर्वमद्भुतमिव प्रतिभाति, यद् भगवता पाणिनिना शब्दानां सिद्ध्यर्थं शब्दा नोक्ता, अपितु तत्रत्यान् लोपागमवर्णविकारान् मनस्याकल्लय्यैकैकस्य कार्यस्य कृते सूत्राणि प्रोक्तानि। तानि च सूत्राण्यधिकारेषु प्रकरणेषु च निबद्धानि सन्ति। एकैकस्मिन् प्रकरण एकैकं कार्यं निःशेषीक्रियते, येन तद्विषयिविचिकित्साव्यपोहो जायते।

सन्ति चैतानि प्रकरणान्यष्टाध्याय्यां तिलतण्डुलवद् विभक्तानि। यथा केषुचिच्छब्देषु नुमागमो भवति। स च नुमागमः प्रमाणभूतेनाचार्येण महता प्रयत्नेन, 'इदितो नुम् धातोः अष्टा. 7.1.58' इत्यत आरभ्य 'दृक्स्ववस्स्वतवसां छन्दसि अष्टा. 7.1.83' इत्यन्तेषु त्रयोविंशतिसूत्रेषु तथा निबद्धः, येन लोके वेदे च न किमपि हीयेत। अतो यथैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति, तथैवैकेन नलोपप्रकरणेन विज्ञातेन सर्वो नुमागमो विज्ञातो भवति।

एवञ्च शब्देषु क्वचिद् लोपः, क्वचिदागमः, क्वचित् सम्प्रसारणं, क्वचिदिडागमः, क्वचिद् द्वित्वं, क्वचिदभ्यासकार्यं, क्वचिद् गुणः, क्वचिद् वृद्धिः, क्वचिद् ह्रस्वः, क्वचिच्च दीर्घो भवति। दीर्घोऽपि क्वचिदङ्गस्य क्वचिदभ्यासस्य, क्वचिदुपधयाः, क्वचिदिटः, क्वचिदुत्तरपदे, क्वचिन्निष्ठायां, क्वचित् शिति, क्वचिल्ल्यपि, क्वचिद् यजित्यष्टादशविधोऽस्मिन्नष्टाध्यायीभवने महता सौष्ठवेन निवेशितः। यथा भगवते वर्णितं भगवतः सकलसुन्दरसन्निवेशं वपुः 'बिभ्रद् वपुःसकलसुन्दरसन्निवेशं' तथैव सकलसुन्दरसन्निवेशं वपुर्बिभ्रतीयमष्टाध्यायी कस्य सचेतसो न मनो हरति। अस्याः प्रकरणानां विज्ञानेन निखिलशब्दराशेः साक्षात्कारो जायते। महता देवेन सायुज्यमप्यनेनैवाधिगम्यते।

प्रकरणेष्वपि वर्तते तादृशोऽनुवृत्तिक्रमः, येन लब्धाकारमपि सूत्रं स्वस्थान एव स्थितं स्वीयं सर्वं तात्पर्यमनायासेनैवाभिव्यनक्ति। सूत्राणामेतेन संनिवेशेन प्रयोजनद्वयं सिध्यति। पूर्वसूत्रादनुवृत्तिं प्राप्य सूत्रं भवति लघ्वक्षरम्, अथ च 'विप्रतिषेधे परं कार्यं' 'पूर्वत्रासिद्धम्' इत्येतयोः विज्ञानेन सम्यक् शास्त्रप्रवृत्त्या जायते शब्दसाधुत्वम्। वस्तूनां सम्यक् संनिवेशस्येयं कला सुकुमारमतीनां बालानामपि मनोमोदिनी आसीद्, अतश्च पाणिनेर्यशः कुमारानपि प्राप्तमासीद् 'आकुमारं यशः पाणिने'रिति।

अधिकाराणां, प्रकरणानां च विज्ञानेन पाणिनेर्हार्दं विज्ञायते, येन विनाष्टाध्यायीसूत्रपाठोऽपि निगदेनैव शब्द्यमानः कामान् दोग्धुं नालं भवति, का कथा पुनरष्टाध्यायीं विना प्रक्रियाग्रन्थेषु कृतस्यान्धयत्नस्य।

यथा कस्यचन महायन्त्रस्य लघुतमा अप्यवयवाः स्वस्वस्थाने स्थिताः महायन्त्रं चालयति, तथैव पाणिनेरस्मिन्नष्टाध्याय्यभिधे महायन्त्रे स्वस्वस्थाने स्थितानि सूत्राण्यनन्तशब्दराशेः स्वरूपं विस्फारयन्ति।

पाणिनेरखण्डतपसः फलभूतमनुपममद्वितीयं सर्ववेदपारिषदं पाणिनेरिदं महत्सुविहितं सामान्यविशेषवल्लक्षणं सौन्दर्यस्य परां काष्ठां बिभर्ति। नेदं शास्त्रं केवलं संस्कृतभषायां व्याकरोति, अपितु विज्ञानमस्याश्रित्य विश्वस्य कापि भाषा व्याकर्तुं शक्यते। अतश्च हर्षनिर्भरमानसस्य भगवतो भाष्यकारस्य, वार्तिककारस्य, न्यासपदमञ्जरिकारयोश्च मुखान्निःसरीसर्ति 'महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य'। 'तदनल्पमतेर्वचनं स्मरत', 'शोभना खलु पाणिनेः सूत्रस्य कृतिः'। किन्तु हन्त! नाधिगतं प्रक्रियाग्रन्थैरष्टाध्याय्याः सौन्दर्यस्यास्य लेशोऽपि, यत् तैर्लक्षणग्रन्थोऽयं लक्ष्यानुसारिक्रमेण तथा विनियुक्तो येन पाणिनेः तपसः फलभूतः सूत्रक्रम एवोच्छिन्नः। तत्रत्यं सूत्रं स्वीयं सर्वमभिप्रायमभिव्यक्तुमेव न भवति क्षमम्। अतो मयाष्टाध्याय्याः सर्वविषयप्रकाशनायाथ च पाणिनेः प्रक्रियाविज्ञानावगमाय

अष्टाध्यायीसहजबोधमाध्यमेन राष्ट्रभाषायां, नव्यसिद्धान्तकौमुदीमाध्यमेन च संस्कृतभाषायां तादृशः पन्थाः सर्वदृग्गोचरीकृतो यो भविष्यति ज्ञानप्रदीपः शब्दान् व्याचिकीर्षूणाम्।

## 4. कालिदासीया सौन्दर्यचेतना

प्रो0 हरेकृष्णशतपथी
कुलपतिः, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः

'चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्, काव्यामृतरसेनान्तश्चमत्कारो वितन्यते..... इति आलङ्कारिक–कुन्तकोक्तदिशा काव्येभ्यः न केवलं चतुर्वर्गफलप्राप्तिर्भवति अपितु काव्यामृतरसास्वादनमाध्यमेन सहृदयानां पाठकानां वा दर्शकानां कश्चन अलौकिकः आनन्दोऽनुभूयते ; यत्र सचेतसामनुभवः प्रमाणं तत्र केवलम्– इति विश्वनाथेन प्रतिपादितम्। अतः मम्मटेन उक्तम्– 'सद्यः परनिर्वृतये.........' इत्यादिः। काव्यामृतरसास्वादजनितस्य एवंभूतस्य अलौकिकस्यानन्दस्य मूलभूतं कारणं किमिति–जिज्ञासायां श्रीमद्भागवते तथा च अन्यत्र उत्तरपक्षः प्रस्तूयते यथा–

तदेव रम्यं रुचिरं नवं नवं
तदेव शश्वन्मनसो महोत्सवम्।
तदेव शोकार्णवशोषणं नृणां
यदुत्तमश्लोकयशोऽनुगीयते।।

एवमपि आनन्दवर्धनेन ध्वन्यालोके प्रस्तूयते–

'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।

काव्ये सन्निहिता कविना स्वप्रतिभया सन्निवेशिता एतादृशी सौन्दर्यचेतना न सर्वत्र सम्भवति। अतः विचित्रेऽस्मिन् कविपरम्परावाहिनि संसारे द्वित्राः पञ्चषा वा कालिदासप्रभृतयः महाकवयः गण्यन्ते।

"कलिदासकविता नवं वयः ........."
"सम्भवन्तु मम जन्म–जन्मनि........."

कालिदासकवितायां परिदृश्यमाना लोकोत्तरा सौन्दर्य्यचेतना अन्यत्र दुर्लभा। कालिदासस्य इयं सौन्दर्य्यचेतना कृत्रिमा वा मानवीयदृष्टिगोचरीभूता न भवति। सर्वदा सर्वथा च इयं स्वाभाविकी, अतिमानवीयचेतनापरिधिपरिव्याप्ता एव। अतः अभिज्ञानशाकुन्तले कविः कथयति– किमिवहि मधुराणां मण्डनं नाकृतिनाम्।
एतादृशसौन्दर्यस्य स्रष्टा अलौकिकः, भोक्तापि अलौकिकः । अतः तत्रैव कविना कथ्यते –

न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ।

कवेः दृष्ट्या जडोऽपि जीवायते; यतः इयं सौन्दर्य्यचेतना सर्वव्यापिनी। धूमज्योतिःसलिलमरुतां सन्निपातः मेघोऽपि एतादृश्याः सौन्दर्य्यचेतनाया अधिकारी। तथैव स्फुटचन्द्रतारका विभावरी। संचारिणी दीपशिखा तस्याः चेतनायाः साक्षिस्वरूपिणी।

विश्वरूपस्य दर्शनं यथा अनेन चर्मचक्षुषा कर्तुं न शक्यते ; अतः 'दिव्यं ददामि ते चक्षुः मे योगमैश्वरम्' इति भगवता श्रीकृष्णेन स्वविश्वरूपदर्शनार्थं दिव्यचक्षुः प्रदत्तम् ; तथैव काव्यगतसौन्दर्य्यतत्त्वस्य निरीक्षणार्थमपि एका सहृदयचेतना आवश्यकी इति काव्यतत्त्वमीमांसकैः प्रतिपादितम्। इयं सहृदयचेतना कालिदासीयसाहित्ये "आर्यं मनः" इति शब्दाभ्यामुपस्थापिता । काव्यामृतरसास्वादनार्थमभिलाषि आर्यं मनः अपेक्षते इति कालिदासः कथयति–

"यदार्यमस्यामभिलाषि मे मनः"

एतत्सर्वं प्रबन्धेऽस्मिन् विस्तृततया विविच्यते।

## 5. महाभाष्ये शब्दस्य वृषभायणम् : एका कला

प्रो. गोपबन्धुः मिश्रः
अध्यक्षः, संस्कृतविभागः, कलासङ्कायः, काशीहिन्दूविश्वविद्यालयः

व्याकरणप्रयोजनकथनप्रसङ्गे महाभाष्ये–

चत्वारि शृङ्गा त्रयो अस्य पदा, द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश।। (ऋ. वे. 4. 58. 3)

इति मन्त्रेऽस्मिन् महर्षिपतञ्जलिः द्वि–त्रि–चतुर–सप्तेति संख्याभिः अन्वितस्य शीर्ष–पाद–शृङ्ग– हस्ताद्यवयवयुतस्य वृषभस्य शब्दगतैः तत्तत्संख्यान्वितपद–विभक्त–वर्णोत्पत्तिस्थलादिभिः सह सादृश्यं परिकल्प्य शब्दमेवात्र

लौकिकवृषभाद् व्यतिरिक्तं विलक्षणं महान्तं वृषभमिव परिकल्पितवान्। वाक्यपदीयकारो भर्तृहरिरपि एतामेव कलात्मिकां विकृतिमनया कारिकया प्रस्तौति–

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते।। (वा. प. 1/130)

शब्दस्य तन्निहिततत्त्वानां च हस्तपदादिकल्पना किं च महता देवेन वृषभेण तेषां साम्यं प्रदर्श्य व्याकरणशास्त्रे अध्येतॄणां प्रवर्तनायामस्याम् आचार्याणां यत् कल्पनावैचित्र्यं सौन्दर्याभिमुखं परिलक्ष्यते तद् विमर्ष्टुं शोधलेखेऽस्मिन् कश्चिद्यत्नो विधास्यते।

## 6. सौन्दर्यशास्त्रम् : भारतीया दृष्टिः

**प्रो. चन्द्रकान्तशुक्लः**
संस्कृतविभागः, रांचीविश्वविद्यालयः

शास्त्रदृष्ट्या सौन्दर्यशास्त्रं वस्तुतः पाश्चात्यैः विद्वद्भिरेव समारब्धमस्तीति स्वीकर्तुं शक्यते, परमस्य तत्त्वानि भारते पूर्वकालतः एव विराजन्ते। संस्कृतकाव्यशास्त्रे 'सौन्दर्यमलङ्कारः' इति कथयता आचार्यो वामनः सहस्राब्दपूर्वमेतस्य तत्त्वस्योल्लेखं कृतवानस्ति। इत्थमेव पाश्चात्यजगत्यपि प्लेटोमहोदयेन अरस्तूमहोदयेन च सौन्दर्यस्योल्लेखः कृतोऽस्ति, परम् अष्टादशशतके वाउमगार्टनः एव प्रथमतया सौन्दर्यस्य वर्णनं शास्त्ररूपेण विदधाति।

इदं सौन्दर्यशास्त्रं 'एस्थेटिक्स' इति यूरोपीयेन शब्देन प्रभावितोऽस्ति। प्रत्यक्षीकरणार्थे ग्रीकभाषायाः 'एस्थेस्थेई' इति शब्दः एवास्य मूलरूपेणास्ति यस्याभिप्रायो भवति 'ऐन्द्रिया संवेदना' अथवा 'ऐन्द्रियसुखस्य चेतना' इति। वाउमगार्टनानुसारं सौन्दर्यमभिरुचेः दर्शनमस्ति, ललितकलानां सिद्धान्तोऽस्ति सौन्दर्यस्य विज्ञानञ्चास्ति। प्लेटो विश्वस्य समग्रमपि रूपं विधातुः रूपं स्वीकुर्वन् सौन्दर्यानुभूतिं दिव्यम् अध्यात्मसाधनावच्च स्वीकरोति। सः सौन्दर्यं शिवत्वेन योजितवान्। परमरस्तूः सौन्दर्यस्य बाह्यरूपस्य प्रामुख्यं प्रतिपादयति। वाउमगार्टनः एतस्मिन् विषये कथयति यत्प्रकृत्यौ कलायां वा यत् सुन्दरं प्रतिभाति, तस्य तत्प्रकृतेः तस्यावस्थायाः तस्य नियमानुकूलायाश्च ज्ञानं सौन्दर्यशास्त्रस्य विषयो भवति।

प्रश्नोऽयं समुदेति यत्किं पाश्चात्यजगतः एव सौन्दर्यशास्त्रस्यागमनं भारतेऽभवत्? स्थूलतयावलोकनेनेदन्तु सत्यमेव प्रतीयते, परं सूक्ष्मातयावगाहनेन दृश्यते यन्नाम्ना सौन्दर्यशास्त्रं भारते नासीत्परं सौन्दर्यतत्त्वस्य विवेचनं तु बहुपूर्वत एव भारतेऽभवदिति। वामनादयस्तु स्पष्टतया सौन्दर्यशब्दस्योल्लेखं कृतवन्तः परमाचार्येण दण्डिना यत्काव्यलक्षणं कृतमस्ति तत्र 'इष्टार्थ' इति पदं पुनश्च पण्डितराजेन जगन्नाथेन यत् 'रमणीयार्थ' इति पदं दत्तमस्ति तयोरप्यभिप्रायः सौन्दर्यमेव परिलक्ष्यते। रसवादिनः ध्वनिवादिनो वा आचार्याः रसतत्त्वस्य यद् विवेचनं कृतवन्तः सन्ति तत्रापि नूनमेव सौन्दर्यस्यैव प्रतीतिर्भवति। गोविन्दचन्द्रपाण्डेयमहोदयः 'सौन्दर्यदर्शनविमर्शे' विस्तरेण प्रतिपादयति यदस्माकं काव्यशास्त्रे एष विषयः विद्यत एव। तथापि इदमपि सत्यमस्ति यत् पाश्चात्ये सौन्दर्यशाास्त्रे काव्यकलातिरिक्तं वास्तुकलायाः मूर्तिकलायाः चित्रकलायाः सङ्गीतकलायाश्च विवेचनं प्राप्यते, तन्नास्ति भारतीये काव्यशास्त्रे।

## 7. सौन्दर्यैकफलोदया कविवाङ्निर्मितिः

**प्रो० सदाशिवकुमारद्विवेदी**
संस्कृतविभागः, कलासङ्कायः, काशीहिन्दूविश्वविद्यालयः, वाराणसी

साहित्यजगति सकलविद्यास्थानाभ्यासप्रसूतया काव्यकलया प्रसूतं सौन्दर्यं सहृदयहृदये विगलितवेद्यान्तरमानन्दं जनयति। सैषा काव्यकला शब्दज्ञानानुपातिनी, वस्तुशून्या विकल्पात्मिका च भवति। स्वतःप्रमाणभूता सौन्दर्यैकफलोदया कविवाङ्निर्मितिः नापेक्षते प्रमाणान्तरं किमपि। सम्पूर्णाऽप्यस्योत्पादिका सामग्री निश्चयेन प्रतिभासिकी, नित्यं निर्वृतिजनकत्वान्नानुभूयते सैषा तथा भावितचेतोभिः सहृदयैः। उल्लंघितनियतिकृतनियमार्थप्रतिपादिकायां कविप्रतिभायां वाङ्मयत्वेन परिस्पन्दते काव्यम्। तत्र च सहृदयचमत्कृतिकारकं सौन्दर्यं वर्णनीयपदार्थस्य रमणीयतामाश्रित्य तदास्वादपरायणानां सहृदयानां चेतसि संस्कारदार्ढ्येनाभिव्यज्यते अनुभूयते च। भावात्मकस्य काव्यजगतः समुत्पादनाय समर्पितसामर्थ्ये अपूर्वप्रतिभान्विते कविसार्थे प्रायेण सौन्दर्यानुप्राणितं काव्यप्रजापतित्वं प्रतिष्ठाप्यते । कविसार्थोऽसौ स्वसामर्थ्येन सौन्दर्यस्याभिव्यंजनाय अचेतनान् पदार्थान् चेतनवद् व्यवहारयति कविकर्मणि स्वातन्त्र्येण । तद्यथा –

अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते ।।
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेतन्नीरसं सर्वमेव तत् ।।

भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ।।(ध्वन्यालोकः 3.42 वृत्तिः)

तात्पर्यात्मकं कविसर्वस्वभूतं तदेतत् सौन्दर्यं काव्यसंसारे वैविध्येन सर्वांगतया अवतिष्ठते। कविवाङ्निर्मितौ सर्वालङ्कारसमन्वितत्वेन सौन्दर्यान्विता काव्यसामग्री औचित्येन समन्विता सहृदयानां हृदि आनन्दमुत्पादयति । रसास्वादतां लभते सहृदयस्य आनन्दैकरूपं चित्तत्त्वं सौन्दर्यानुभूतेरुपायोपेयोभयतया प्रतिष्ठितम्। रसानुभूतौ प्रमाणभूतं तदेतत् चित्तत्त्वं काव्येन अभिव्यंजितेन सौन्दर्येणाप्लुतं वाङ्मयात्मकं विश्वमतिक्रम्य परं स्वदते। असकृज्जायमानेन लोकानुभवेन विदग्धीभूतानां सामाजिकानां हृदि काव्यमात्रेण समर्पितैः विभावानुभावादिभिर्जनितः आस्वादः काव्ये सौन्दर्यनियामको भवति। तद्यथा –

आ भावनोदयमनन्यधिया जनेन
यो भाव्यते मनसि भावनया स भावः ।
यो भावनापथमतीत्य विवर्त्तमानः
साहङ्कृते हृदि परं स्वदते रसोऽसौ।। शृङ्गारप्रकाशः1.10।।

कविप्रतिभाप्रसूते काव्यजगति रसात्मकं सौन्दर्यं जनयितुं सत्यासत्यत्वेनानिर्धारिताः कल्पनामात्रैककल्पिताः सम्भाव्यमाना अर्थाः औचित्यनिबन्धनतया अवतिष्ठन्ते। कविवाङ्निर्मितौ सौन्दर्योत्पादकः प्रतिभासनिबन्धनः सकलकविसंरम्भः वस्तुस्वरूपम् अतिक्रम्य परं स्वदते – न हि प्रतिभासस्तादात्म्येन वस्तुन्यवतिष्ठते। (काव्यमीमांसा 9.16 वृत्तिः)

कलात्मकतया सौन्दर्यजननाय कविसरस्वत्या उपनिबध्यमानायाः वाङ्निर्मितेः सारः कथमपि न परिहीयते। कवयः कृतभूरिसंरम्भा अपि प्रातिभस्य विश्वस्य सारमतिक्रमितुं न क्रमन्ते। सैषा सौन्दर्यैकफलोदया कविवाङ्निर्मितिः श्रुतिस्मृत्याद्यर्थसार्थान् कलात्मकत्वेनादधाना कविप्रतिभायां प्रातिभासिकतया परिस्फुरति –

आसंसारमुदारैः कविभिः प्रतिदिनगृहीतसारोऽपि ।
अद्याऽप्यभिन्नमुद्रो विभाति वाचां परिस्पन्दः ।। काव्यमीमांसा 12.1।।
सरस्वती सा जयति प्रकामं देवी श्रुतिः स्वस्त्ययनं कवीनाम्।
अनर्घतामानयति स्वभङ्ग्या योल्लिख्य यत्किंचिदिहार्थरत्नम्।। काव्यमीमांसा 13.42।।

परिच्छिन्नशक्तिभ्यो प्रसिद्धप्रजापतिभ्यो उत्कर्षेण राराजते अपरिच्छिन्ना अप्रतिमप्रातिभसामर्थ्येन सम्पन्ना सौन्दर्यैकफलोदया कविवाङ्निर्मितिः यत्र परिस्पन्दितः वर्णनीयार्थः निस्सीमा सम्पद्यते।

## 8. आचार्यसनातनाभिमतकाव्यसौन्दर्यविचारः

डॉ0 शिवरामशर्मा
सहायकाचार्यः (संस्कृतम्), संगीतशास्त्रविभागः,संगीत एवं मंचकलासंकायः
काशीहिन्दू विश्वविद्यालयः, वाराणसी। मो0नं0 8090232724
shivramsharma09@gmail.com

नित्यज्ञानस्वरूपपरमेश्वरोपदिष्टं वेदं प्रमाणीकृत्योपबृंहितेऽनेकशास्त्ररूपैर्विस्तृते च संस्कृतवाङ्मये काव्यं तद्विवेचकं काव्यशास्त्रञ्चानितरसाधारणमहत्त्वमादधदति प्राचीनकालादेवानवरतमुदारमतिभिरूपास्यते। तत्र किमिदं काव्यं नामेति जिज्ञासायामाचार्यैः स्वस्वदृशानेकानि काव्यलक्षणानि काव्यत्वाधयकत्त्वानि च विचारितानि, एतच्च सर्वं काव्यतत्त्वविचारकं शास्त्रं काव्यशास्त्रनाम्नाम्नातमद्याप्यभिनवविचारैरूपचयं परिचिनोति। लौकिकालौकिकानेक–प्रयोजनपूरकतायामपास्तसन्देहा अप्याचार्या अस्य काव्यस्य लक्षणनिर्धारणेऽनेकमततामेव बिभ्रति। तत्र केचिच्छब्दार्थयोरन्ये शब्दस्येतरेऽर्थस्यापरे वाक्यस्य काव्यातामङ्गीकुर्वन्तः रसालङ्काररीतिध्वनिवक्रोक्त्यौचित्यादीन् काव्यत्वाधायकत्वेनावगमयन्ति। सेयं निरन्तरमागमानुमोदितकाव्यविचारपरम्परा अद्याप्यग्रे सार्यत एव सत्तमैर्विद्वद्दुत्तमैः।

आधुनिकेषु काव्यशास्त्राचार्येषु सकलशास्त्रविशारदा अनवरतसुरभारतीसमुपासनैकव्यसनव्यतियापितवया महाकवयः महामहोपाध्याया आचार्यरेवाप्रसादद्विवेदिमहोदयाः सन्त्यग्रगण्याः। एभिराचार्यैः प्रणीतः काव्यालङ्कारकारिकेत्याख्यः काव्यशास्त्रोन्नायकोंऽशतया प्राचीनाचार्यसरणिमनुगतोऽपि प्राधान्येनाभिनवबोधपद्धत्युद्भावको ग्रन्थोऽनितरसाधारणं महत्त्वमादधति।

ग्रन्थेऽस्मिन्नाचार्यवर्यैः शब्दार्थकाव्यात्मशब्दशक्तिदोषगुणालङ्कारादयः काव्यशास्त्रान्तर्गताः विषयास्तु सामान्यतयैव व्याख्याताः विशेषतः काव्यलक्षणं तत्सौन्दर्याधायकञ्चालङ्कारतत्त्वमुन्मीलितम्। एषां मते आनन्दकोषोल्लासकोऽर्थसंघात एव काव्यम्। यथोक्तं तैरेव –

आनन्दकोषस्योल्लासे शब्दब्रह्म/लोकोत्तर–विभावना।
अलङ्कृतार्थसंवित्तिः कविता सर्वमङ्गला।। (का.–1)

अग्रेऽपि तेन काव्यमेव लक्षयतोक्तम्–

ज्ञानात्मकेन शब्दाख्येनार्थेनार्थान्तरात्मकः

य: कश्चन चमत्कारी बोधः काव्यं स उच्यते।। (अ0का0 134)

एभिराचार्यैः काव्यशास्त्रे प्रसिद्धानां रसालङ्कारारीतिध्वनिवक्रोक्त्यौचित्याख्यानां षण्णामपि प्रस्थानानामन्तर्भावो यथायोग्यमन्योऽन्यस्मिन् विधाय सिद्धान्ततयोक्तम्–

औचित्यञ्च रसाञ्चापि त्यक्त्वा चत्वारि केवलम्।
प्रस्थानानि भजन्त्येतान्यपि कृत्स्नान्यभिन्नताम्।।
एतेषु सम्प्रदायत्वं द्वयोरेव समञ्जसम्।
अलङ्कारो ध्वनिश्चेति संज्ञयोर्ग्रन्थसन्ततेः।।
प्रमेयमात्रनिष्ठत्वादनयोरपि केवलः।
अलङ्कारो हि काव्यस्य धर्मतां याति मन्मते।। (उपस्कारकारिका 18–20)

अलङ्कारस्य काव्यात्वमत्वमुपपादयद्भिस्तैरुक्तम्–

काव्येऽलङ्कार एवात्मा स एवास्मिन् स्थितो मतः।
अन्यकायस्थितो धर्मः किमन्यत्रात्मताम व्रजेत्।। (अ0का0 26)

अस्येदं तात्पर्यम्– येयं पूर्वैः कैश्चिदाचार्यैः रसस्य काव्यात्मता व्यवस्थाप्यते सा न, यतो हि–

**रसस्याधिकरणं सामाजिकः न तु काव्यं,** अतः सामाजिकान्तःस्थितेन रसरूपेण धर्मेण काव्यस्यसात्मत्वसाधनं निरूपपत्तिकमेव वस्तुतस्तूपपत्या अलङ्कारस्यैव काव्यात्मता सिद्ध्यति।

आचार्यैरेभिः अलङ्कारशब्दः सर्वथाभिनवार्थे व्युत्पादितः । शब्दोऽयं प्रायः द्विधा व्युत्पाद्यते भावकरणयोर्घञः विधानात्। तत्र अलङ्कृतिरलङ्कार इति भावव्युत्पत्तिः, सा चैषा सौन्दर्यं स्पृशति "सौन्दर्यमलङ्कारः" इति वामनवचनात्। अलङ्क्रियतेऽनेनेत्यलङ्कारः इति करणव्युत्पत्तिः सा चैषोपमादीनविषयीकरोति। आचार्यसनातनाभिमतोऽलङ्कारशब्द आभ्यां भिन्नार्थकः, ते कर्मण्यण प्रत्ययं विधाय **"अलं पर्याप्तं करोतीत्यलङ्कारः"** इत्यादिरूपेण शब्दममुं साधयन्ति। यथा तैरेवोक्तमस्या व्युत्पत्तेः फलम् –

अत्रालमिति द्वितीयार्थकमव्ययं सायं प्रातरिति सप्तम्यर्थकमव्ययमिव। सा चेयं तृतीया व्युत्पत्तिः सौन्दर्यं, सौन्दर्यजनकान् उपमादीन् विशेषान्, अन्यांश्च तथाविधानर्थान्तरादीनधिकरोति।

सा चेयमलङ्काररूपा पूर्णतायुक्ता पर्याप्तिः विच्छित्तिसम्पन्ना सती काव्यतामादधातीत्यादिरूपेणाचार्यैः ग्रन्थेऽस्मिन् योऽभिनवः सिद्धान्तः प्रतिपादितः तस्य समीक्षणं विधाय तेषां काव्यसौन्दर्यदृष्टेः समुन्मीलनं लेखेऽस्मिन् विधास्यते।

## 9. संस्कृतवाङ्मये कलानां विभागाः

**डॉ. शोमा मिश्रा**

एसोशिएट प्रोफेसर, संस्कृतविभागः, वी.एस.एस.डी. कॉलेज, कानपुर, दूरभाष 7275000163

कलाकाष्ठादिरूपेण परिणामप्रदायिनि।
विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते।। श्रीदुर्गासप्तशती– 11/9

श्रीदुर्गासप्तशत्याः मन्त्रेऽस्मिन् साक्षाद् भगवती एव कला। मानुषेषु कलेयं प्रतिभारूपेणावस्थिता विद्यते। कलाकारः स्वीयया प्रतिभयैव कलासु सहृदय–हृदयाह्लादकतां समावेशयितुं क्षमते। शोधपत्रेऽस्मिन् संस्कृतवाङ्मये प्रतिपादिताः कलानां सर्वेऽपि विभागाः संकलय्योपस्थाप्यन्ते।

संस्कृते कल् शब्दसंख्यानयोः, कल् क्षेपे, कल् आस्वादने, कल् गतौ संख्याने चेति नानार्थकाद् कल् धातोः अचि टापि च प्रत्यययोर्निष्पद्यते 'कले'–'ति' पदम्। शब्दकल्पद्रुमे 'कलायाः सर्वेऽप्यर्थाः संकलिताः, तद्यथा– कलयति वृद्धितो धनं संगृहणाति सञ्चिनोतीत्यर्थः मूलधनवृद्धिः, अंशः भागो वा (राशेः त्रिंशत्तमः, षष्टितमः, अष्टादशशततमः भागो वा), चन्द्रमसः षोडशकलाः, त्रिपुरसुन्दर्याः षोडशावयवाः, द्वादशसु संक्रान्तिषु परिभ्रमतः सूर्यस्य द्वादश तेजांसि, अग्निमण्डलस्य दशसु भागेषु पार्यन्तिको भागः, औपनिषदः षोडशकलः पुरुषश्चेति। कला शब्दोऽयं छन्दःशास्त्रे,ज्योतिर्विज्ञाने, चिकित्साशास्त्रे चापि बहुधा प्रयुज्यते।

महर्षेः वात्स्यायनस्य कामसूत्रे कामशास्त्रस्याङ्गविद्यात्वेन चतुष्षष्टिः कलाः उद्दिष्टाः –

1. गीतम्, 2. वाद्यम्, 3. नृत्यम्, 4. आलेख्यम्, 5. विशेषकच्छेद्यम्, 6. तण्डुलकुसुमावलिविकाराः,
7. पुष्पास्तरणम्, 8. दशनवसनाङ्गरागाः, 9. मणिभूमिका कर्म, 10. शयनरचनम्, 11. उदकवाद्यम्,
12. उदकाघातः, 13. चित्रयोगाः, 14. माल्यग्रथनविकल्पाः, 15. शेखरकापीडयोजनम्,
16. नेपथ्यप्रयोगाः, 17. कर्णपत्रभंगाः, 18. गन्धयुक्तिः, 19.भूषणयोजनम्, 20. ऐन्द्रजालाः,
21. कौचुमारयोगाः, 22. हस्तलाघवम्, 23. विचित्रशाकयूषभक्ष्यविकारक्रिया,
24. पानकरसरागासवयोजनम्, 25. सूचीवानकर्माणि, 26. सूत्रक्रीडा,27. वीणाडमरुकवाद्यानि,
28. प्रहेलिका, 29. प्रतिमाला, 30. दुर्वाचकयोगाः, 31. पुस्तक वाचनम्, 32. नाटकाख्यायिकादर्शनम्,
33. काव्यसमस्यापूरणम्, 34. पट्टिकावानवेत्रविकल्पा 35. तक्षकर्माणि, 36. तक्षणम्, 37. वास्तुविद्या,
38. रूप्यपरीक्षा, 39. धातुवादः,40. मणिरागाकरज्ञानम्, 41. वृक्षायुर्वेदयोगाः,

42. मेषकुक्कुटलावकयुद्धविधिः, 43. शुकसारिकाप्रलापनम्, 44. उत्सादने संवाहने केशमर्दने च कौशलम्, 45. अक्षरमुष्टिकाकथनम्, 46. म्लेच्छितविकल्पाः, 47.देशभाषाविज्ञानम्, 48. पुष्पशकटिका, 49. निमितज्ञानम्, 50. यन्त्रमातृका, 51. धारणामातृका, 52. सम्पाठयम्, 53.मानसी काव्यक्रिया, 54. अभिधानकोशः, 55. छन्दोज्ञानम्, 56. क्रियाकल्पः, 57. छलितकयोगाः, 58. वस्त्रगोपनानि, 59. द्यूतविशेषः, 60. आकर्षक्रीडा, 61. बालक्रीडनकानि, 62. वैनयिकीविद्याज्ञानम्, 63. वैजयिकीविद्याज्ञानम्, 64. व्यायामिकीविद्याज्ञानम् इति।

कामसूत्रस्य साम्प्रयोगिकेऽधिकरणेचतुष्षष्टिः पांचालिक्यः कला अप्युदिदष्टाः। कामसूत्रस्य जयमङ्गलाटीकायां चतुर्विंशतिः कर्माश्रयाः, विंशतिः द्यूताश्रयाः, षोडश शयनोपचारिक्यः, चतस्रः उत्तरकलाश्च प्रतिपादिताः। शृङ्गाप्रकाशे भोजराजेन कामसूत्रस्य कलानां द्वावपि विभागौ संयोज्य नवीन एव विभागः प्रस्तुतः। एतस्य मते गीतादिकाः चतुर्विशतिः सन्ति कर्माश्रयाः कलाः, विंशतिः द्यूताश्रयाः, षोडश शयनोपचारिक्यः, चतस्रः उत्तरकलाश्च। शुक्रनीतिकारेण शुक्रनीतेः मिश्रखण्डे विद्यानां कलानां च भेदनिर्देशपुरस्सरं कलानां विभागाः प्रस्तुताः–

यद् स्याद् सम्यक् वाचि, कर्म विद्याभिसंज्ञकम्।
शक्तो मूकोऽपि यत्कर्तुं, कलासंज्ञं तु तत्स्मृतम्।। शुक्रनीति 3.16।।

वाचा सम्पाद्यमानत्वाद् विद्यास्थानीयाः सन्ति द्वात्रिंशत् कर्माणि, वाचं विनैव सम्पाद्यमानत्वात् कलास्थानीयाः सन्ति पुनः चतुष्षष्टिः। कला इमाः बहुधा विभक्ताः– षड् शिल्पशास्त्रान्तर्गताः, सप्त गान्धर्ववेदान्तर्गताः, दश आयुर्वेदान्तर्गताः, पंच धनुर्वेदान्तर्गता, आसन–मुद्रासंवलिता योगकला, सारथ्यम्, गजाश्वारोहणम्, मृत्तिकाकला, काष्ठकला, पाषाणकला, धातुकला, चित्रादिलेखनकला, वापीकूपप्रासादादिसमभूमिकला, वाद्यानां यंत्राणां च कृतिकला, रंजनकला, यन्त्रणामातृकाकला, नौकारथादियानां कृतिज्ञानकला, सूत्रादिरज्जुकरणज्ञानकला, पटबन्धरत्नवेधादिकला, स्वर्णादियाथात्म्यविज्ञान–कृत्रिमस्वर्णरत्नादिक्रियाज्ञानकला, सूत्रक्रीड़ा (कंचुकादीनां सीवने विज्ञानकला), तरणकला, वस्त्रभाण्डसम्मार्जनकला, क्षुरकर्मकला, तिलमांसादिस्नेहनिष्कासनकला, सीराद्याकर्षण–वृक्षारोहण–कला, मनोनुकूलसेवाकृतिज्ञानकला, वेणुतृणादिपत्राणां कृतिज्ञानकला, कांचपात्रनिर्माणकला, जलसंसेचनकला, शस्त्रास्त्रकृतिज्ञानपल्याणादिक्रियाज्ञानकला, शिशुसंरक्षणकला, सुयुक्तताडनज्ञानकला, वर्णानां सुरम्यलेखनकला, ताम्बूलरक्षादिकृतिकला, आदान–प्रतिदानकला, पशुचर्मांगनिर्हार–क्रियाज्ञानकला, दुग्धदोहनादिविज्ञानकला च।

क्षेमेन्द्रस्य कलाविलासे कलानां भिन्ना एव विभागा जाताः– यासु सन्ति द्वात्रिंशत् धर्मार्थकाममोक्षप्रदाः, द्वात्रिंशत् मात्सर्य–शील–प्रभाव–मान–निमित्ताः, चतुष्षष्टिः स्वर्णकृत्कलाः, चतुष्षष्टिः गणिकानाः कलाः, दश भैषज्यकलाः, षोडश च कायस्थकलाः।

ललितासहस्रनामस्तोत्रस्य प्रत्येकं विभागस्य नाम ललितादेव्याः कलया सम्बद्धम्– उपोद्घाताख्या कला, तापनी कला, धूम्रिका कला, मरीच्याख्या कला, ज्वालिनी कला, रुच्याख्या कला, सुषुम्णा कला, भोगदा कला, विश्वा कला, बोधिनी कला, धारिणी कला, क्षमाख्या कला चेति। अत्रैव कामकला, कलावती, कलालापादीनां पदानां विवेचने सौभाग्यभास्करटीकाकारः श्रीभास्करदेवः चतुष्षष्टिः कला अप्युल्लिखति।

शार्ङ्गधरीये कथाकोषे श्रीश्रीधरः लिपिज्ञानादारम्य तिरोधानपर्यन्तं चतुष्षष्टिः कलाः प्रतिपादयति, यासु मारण–मोचन–स्तम्भनादिकाः सन्ति वामकेश्वतन्त्रसम्बद्धाः। श्रीधरीयायां लक्ष्मीपीठिकायां गीताद्याः कामसूत्रसम्बद्धा एव कलाः प्रतिपादिताः। ललितविस्तरे षण्णवतिः कलाः परिगणिताः।

प्रबन्धकोशे लेखनकलादि – केवलविधिकलापर्यन्तम् कलानां द्वासप्ततिः भेदाः निरूपिताः। शुक्लयजुर्वेदेऽपि शैलूष – मागध – ऋभ्वादीनां कलानां संज्ञानं भवति। मागधादि – वंशनर्तिन् पर्यन्तं कलाकाराणां त्रिंशत् भेदा अप्यत्र परिगणितुं शक्यन्ते। एवं संस्कृतवाङ्मये निरूपिताः कलानां विभागाः विद्वद्भिः अवश्यमेवावधेयाः।।

## 10. श्रीमद्भागवते सौन्दर्यस्य तत्त्वविवेचनम्

डॉ.धू.रामकृष्णः
संस्कृतविभागाध्यक्षः, मारिस्स्टेल्लाकलाशाला, विजयवाडा, आन्ध्रप्रदेशः

धनंजये हाटकसंपरीक्षा महारणे शस्त्रभृतां परीक्षा ।
विपत्तिकाले गृहिणीपरीक्षा विद्यावतां भागवते परीक्षा ।। इति भागवत प्राषस्त्यं,

तथा–

अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ।
गायत्रीभाष्यभूतोऽसौ वेदार्थपरिबृंहितः ।।
पुराणानां सारभूतः साक्षात् भगवतोदितः ।
ग्रन्थोष्टादषसाहस्रः श्रीमद्भागवताभिधः ।। इति गरुडवचनात्–
वेदः पुराणं काव्यं च प्रभुर्मित्रं प्रियेव च ।
बोधयन्तीति हि प्रादुस्त्रिवद्भगवतं पुनः ।। इति हरिलीलामृतवचनाच्च,

भागवतस्वरूपं चालक्ष्य तत्प्रतिपादितसौन्दर्यस्य निरूपणायैवास्माकमयमारम्भः । तत्र–

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ।।(1.7.10)

इत्यात्मारामाणामप्याकर्षको सकलगुणाकरः श्रीकृष्णः प्रदर्शितः। सौन्दर्यापरपर्यायं तद्रूपशीललीलादिकं तत्र हेतुः। श्रीमद्भागवते बहुषु स्थलेषु तत्सौन्दर्याकृष्टानां वचांस्येव तत्तत्त्वावगत्यै प्रमाणमर्हन्ति । तथा हि –

तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो गतिमण्वीं प्रयुङ्क्ते ।। (3.25.36)

श्रुत्वा गुणान् भुवनसुन्दरश्रुण्वतां ते
निर्विष्य कर्णविवरैर्हरतोऽङ्गतापम् ।
रूपं दृषां दृषिमतामखिलार्थलाभम्
त्वय्यच्युताविशति चित्तमपत्रपं मे ।।(10.52.37)

इत्यादिकं, 'वेद्यं वास्तवमत्र वस्तु शिवदम्' (1.1.2) इत्यनेन सौन्दर्यालम्बनं वस्तु शिवदमित्यपि स्पष्टयति । तदेतत्समग्रभागवतग्रन्थमालोड्य यथामति विवेचयिष्याम इति षम् ।।

## 11. ऋग्वेदस्य काव्यशास्त्रीयतत्त्वविमर्शः

प्रो0 मञ्जुला देवी
संस्कृतविभागाध्यक्षा, गौहाटीविश्वविद्यालयः, गौहाटी

वैदिकसाहित्यं विश्वस्य प्राचीनतमं साहित्यमस्ति। तत्रापि सर्वप्राचीना विशाला सर्वमान्या च ऋक्संहिता। प्रकृतिजगतो यदनुपमं सौन्दर्यं तद् अलंकारप्रयोगेण रसभरेण च वैदिकर्षिभिः नितरां वर्णितमस्ति ऋग्वेदे। वेदमन्त्रेषु उपमारूपकोत्प्रेक्षातिशयोक्तिविरोधाभासप्रभृतीनामलङ्काराणां सार्थकः प्रयोगः स्फुटं विद्यते। सर्वालङ्कारपेक्षया उपमालंकारस्य व्यवहारो वेदमन्त्रेषु बहूपलभ्यते। उपमामाला बहुषु सन्दर्भेषु मन्त्रगाम्भीर्यमावहति (द्रष्टव्यम् ऋग्वेदे 1/65/6, 6/6/2)। उपमावाचकशब्दानां मध्ये न, नु, चित्, इव, यथा– इत्येतानि पदानि भूयशो व्यवहृतानि सन्ति ऋग्वेदे (द्रष्टव्यम् ऋग्वेदे 1/66/1, 1/115/2)। यद्यपि वैदिकसाहित्ये नवरसानां भेदो न स्वीकृतोऽस्ति तथापि तेषां व्यञ्जनं सुस्पष्टमेवानुरणितं वर्तते तत्र ऋग्वेदे। देव्या उषसो वर्णनप्रसंगे कविकल्पनाया अभिनवोन्मेषो विद्योतते यत्र सूर्यः प्राय उषसः पतिरिति कल्पना कृता। आसु वर्णनासु शृङ्गाररसस्य सञ्चारणं नूनमेवोपलभ्यते। (द्रष्टव्यम्, ऋग्वेदे 1/115/2,124/7)। तत्रैव पुरूरवोर्वशीसंवादसूक्ते (ऋग्वेदे 10/95) प्रणयक्लिष्टः पुरूरवाः स्वभार्यामुर्वशीं प्रति स्वस्य विरहजनितं वैक्लव्यं यथा प्रकटयति ततो विप्रलम्भशृंगारस्य सङ्केतो मिलति।

ऋग्वेदस्य यमयमीसूक्त–सरमापणिसूक्त–पुरूरवोर्वशीसूक्त–विश्वामित्रनदीसम्वाद–सूक्तप्रभृतीनि यानि कथोपकथनपराणि सम्वादसूक्तानि सन्ति, तानि आश्रित्यैव परवर्तिनि काले भारतीयनाटकानामुत्पत्तिर्जाता इति प्राच्यैः पाश्चात्यैश्च पण्डितैः सम्यगभिहितम्। काव्यिकदृष्ट्याऽपि सूक्तान्येतानि नितान्तं सरसानि रमणीयानि च सन्ति। एवं तावद् वक्तुं पार्यते यत् वैदिकसाहित्ये न केवलं धर्मतत्त्वमेव निहितमस्ति, अपि तु काव्योपादानान्यपि सम्यग् उपलभ्यन्ते। वेदशास्त्राणि न केवलं शब्दप्रधानानि प्रभुसम्मितानि च – यत् मम्मटाचार्येण तदीये काव्यप्रकाशे प्रारम्भे एव उक्तमस्ति, परन्तु काव्यत्वभावनया ऋग्वेदः सुसमृद्ध एवास्ति, वेदमन्त्राणामनुशीलनेन यत् प्रतीयते प्रकामम्।

## 12. पाणिनीयतन्त्रे भाष्यटीकादिग्रन्थेषु सान्दर्यतत्त्वम्

डा0 गिरिधारी पण्डा
सहायकप्राध्यापकः विभागाध्यक्षश्च, संस्कृतविभागः, मिदनापुरकालेज
drgiridharipanda@gmail.com 09800045250

वागेव विश्वा भुवनानि जज्ञे। इत्युक्त्यनुसारेण भाषा हि समुदायस्य महान् वाङ्निधिः। भावाभिवेगस्य प्रकटनाय या सर्वथा पाथेयीभूता,यया परस्परमवबोद्धुं समर्था,सा भाषा इत्यामनन्ति भाषाविज्ञानविदः। तस्याः किल भाषायाः सम्यग्व्यवहारार्थं कस्यचित् नियमविशेषस्यानुशासनविशेषस्य वा आवश्यकता विद्यते, स एव नियमविशेष शास्त्रीयपरिभाषायां व्याकरणपदेनाभिधीयते । तेषामेव नियमानामनुशासनात्मकमार्गविशेषाणां वाऽऽधारभूतं पाणिनीयव्याकरणम्,यत् खलु वैदिक-लौकिकसंस्कृतयोः प्राणभूतम्। सूत्र-वार्त्तिक-भाष्यसंरचनेन तद्व्याकरणं त्रिमुनिव्याकरणभावेन ख्यातम्। त्रयः मुनय अस्मिन् वंश्ये इति तात्पर्यात् तत् त्रिमुनिव्याकरणं विशेषतः पाणिनिना प्रोक्तमित्याशयेन तत् पाणिनीयमिति कालगरिम्ना पाणिनीयपरिधिं प्रवृत्तिं वाऽऽधारीकृत्य प्रवर्त्तते। व्याक्रियन्ते व्युत्पाद्यन्ते असाधुशब्देभ्यो साधुशब्दाः पृथकीकृत्य विविच्यन्ते इति व्युत्पत्त्या साधुशब्दसम्पादकं शास्त्रमिदम् येन शब्दानुशासनमित्यस्य नामकरणं सार्थक्यं भजते। यद्यपि शास्त्रेणाऽनेन शब्दानां साधुत्वासाधुत्वविवेचनं

विधीयते,तथापि तत्रोपपादितेषु बहुषु सूत्रेषु यथा बहूनां सामाजिक-सांस्कृतिक-धार्मिक-राजनैतिक-अर्थनैतिक-वैज्ञानिकतथ्यानां परिचयः प्राप्यते, तथैव तत्रावलम्बितासु व्याख्यानशैलीषु मानवजीवनस्य सर्वोत्कृष्टं साधनं चिन्तनस्य महत्त्वपूर्णमुपकरणं भारतीयकलायाः सौन्दर्यस्य च तत्त्वमप्युपलभ्यते।विषयेऽस्मिन् भाष्यकारेण निर्मथ्यतथ्यमिदं प्रतिपादितं यत् - सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैकः पन्थाः शक्यः आस्थातुम् इति।सर्वेषां शास्त्राणां सिद्धान्तानां तथ्यानां च सर्वविधः समन्वयः दृष्टो विद्यते। एकस्मिन् पक्षे शब्दशास्त्रस्य मर्यादादृष्ट्या शब्दानामनुशासनम्,अपरस्मिन् पक्षे भाषायाः चरित्रदृष्ट्या संस्कृतेः, भारतीयकलायाः सौन्दर्यस्य वा प्रकाशनम् इत्येतद् भवति व्याकरणस्य चारित्रिकमनुसन्धानम्। सूत्रात्मकरीत्या स्वात्मप्रकाशं लभमानं पाणिनीयव्याकरणं न केवलं शब्दानुशासनस्य रूपरेखसंघटनमादधाति,परन्तु साहित्यस्य संस्कृतेश्चात्मप्रकाशः भारतीयविद्यायां दृष्टिगोचरीभूतो भवति।तेन क्रमेण भारतीयकलायाः सौन्दर्यस्य वा तत्त्वमन्यतमम् । शब्दार्थौ सहितं काव्यम्, वाक्यं रसात्मकं काव्यम्, रमणीयार्थकप्रतिपादकः शब्दः काव्यम् - इत्यादीनि अलङ्कारशास्त्रेषु प्रतिपादितानि काव्यलक्षणानि शब्दप्रयोगस्य कलामेव सौन्दर्यतत्त्वरूपेणाभिसूचयन्ति।कवेः शब्दप्रयोगचमत्कारेणैव तत्प्रसिद्धिः समुपगम्यते। यत्तथ्यमादाय कालिदासस्योपमा, भारवेरर्थगौरवम्, दण्डिनः नैषधस्य वा पदलालित्यमित्यादयः प्रसिद्धयः सिद्धाः भवन्ति।सर्वाण्येव शास्त्राण्यपि स्व-स्वप्रतिपादनशैल्यां सौन्दर्यतत्त्वमुपस्थापयन्ति। शास्त्रेषु तत्त्वमिदमनुभूयन्ते बुद्धिव्यापारोपगमात् चिन्तनस्य सर्वोत्कृष्टं साधनं सौन्दर्यतत्त्वमिततिद्वचनात् वा। व्याकरणशास्त्रेऽपि प्रयुक्ताः शब्दप्रयोगाः, अवलम्बिताः शैल्यः तस्य शास्त्रस्य सौन्दर्यमुपपादयन्ति।पाणिनेः अष्टाध्यायां सूत्रशैली,महाभाष्ये प्रश्नोत्तरशैली,प्रदीपोद्योतटीकयोः प्रक्रियाग्रन्थेषु च शास्त्रीयशैली, सिद्धान्तकौमुद्यादिषु व्याख्यानग्रन्थेषु वृत्तिरूपसंरचनेन वृत्त्यात्मिकाशैली वृत्तिशैली वा, तत्त्वबोधिनी-बालमनोरमादिषु टीकासु टीकाग्रन्थेषु च दार्शनिकी शास्त्रीयशैलीत्यादयः तत्तद्ग्रन्थस्य सौन्दर्यं निरूपयन्ति,शब्दशास्त्रेषु शाब्दिकानां शब्दप्रयोगे अपूर्वसामर्थ्यञ्चोपपादयन्ति । अतः तेषां समेषां तथ्यानामाकलनपुरस्सरं तत्तद्व्याकरणग्रन्थेषु निहितानां सौन्दर्यतत्त्वानां यथामति समुपस्थापनेन शोधप्रबन्धोऽयं विकसितः।

## 13. ऋग्वेदस्य उषस्–सूक्तेषु काव्यसौन्दर्यम्

डॉ. किरण आर्या
सहायक–प्राध्यापिका, संस्कृतविभागः, डॉ. हरीसिंहगौरविश्वविद्यालयः, सागर (म.प्र.) मो. 09479983604

न तज्ज्ञानं न सौन्दर्यं न सा विद्या न सा कला।
नासौ योगो न तत्कर्म वेदेऽस्मिन् यन्न दृश्यते।।

संस्कृते भारतीयकलायाः यान्यपि तत्त्वानि, सौन्दर्यस्य च यानि तत्त्वानि आदितः अद्यावधि येषु संस्कृतमयेषु काव्येषु, काव्यग्रन्थेषु, नाट्येषु, नाट्यग्रन्थेषु, गीतिषु, कवितासु दृश्यते, तस्य सकलस्य मूलस्रोतास्तु वेदा एवेति निश्चप्रचम्, विदुषाञ्चेहैकमत्यम्, वेदकाव्यानां सृष्ट्यादौ प्रवर्तमानत्वात् – 'पश्य देवस्य काव्यं न ममार न जीर्यति' (अथर्व. 10.8.32) इति स्वयं वेदभगवता प्रोक्तत्वाच्च। अतः 'सर्वज्ञानमयो हि सः'(मनु.) इत्युक्तत्वात् नातिशयोक्तिरिदं वर्तते यत् वेदाः एव काव्यस्योद्भावकाः काव्यतत्त्वस्य च परिचयदायकाः सन्ति। यतोहि – 'वाक्यं रसात्मकं काव्यम्' (साहित्यदर्पणः) विश्वनाथस्य समुचितमिदं लक्षणं वयं काव्यलक्षणं स्वीकुर्मश्चेद् वेदा अपि सरसाः सन्तः काव्यत्वं धारयन्ति। यथा चोक्तम् – उत्कर्षहेतवः प्रोक्ता गुणालंकाररीतयः, अतः रसमयोत्कर्षकरूपाः रीतिगुणालंकारादय एव काव्यतत्त्वानि सन्ति। तथा चैतेषां प्रचुरता अपि वेदेषु दृश्यत एव। नाट्यशास्त्रस्य तु रचना एव वैदिकसंवादसूक्तानि चाधिकृत्य वर्तते। यतो हि वेदोक्त–विश्वामित्रनदीसंवादः (नद्यःसूक्तम्), पुरुरवा–उर्वशीसंवादा एव नाट्यस्थसंवादानाम् आदर्शाः प्रेरणादायकाश्च सन्ति। अर्थात् वेदेभ्यः एव दृश्यश्रव्योभयकाव्ययोरुत्पत्तिरित्यत्र न कश्चित् सन्देहः।

वेदेषु उपमानानाम्, अलङ्काराणां, रसानां सौन्दर्यं सर्वत्र विद्यते, परं ऋग्वेदस्य उषस्–सूक्तमतिशयेन काव्यात्मकसौन्दर्येण मण्डितं प्रतिभाति। स्वयं उषसः सर्जना, वैदिक–ऋषीणां सौन्दर्यभावनायाः अप्रतिमसर्जना विद्यते । उषसः वर्णनमाध्यमेन ऋग्वेदस्य कवयः निजालौकिकप्रतिभामभिव्यंजयन्ति, तस्याः देव्याः अनुपमं सौन्दर्यं न कश्चिद्देवः देवी वा आप्नोति सकलेऽपि वैदिकसाहित्ये।आपृथिव्याः द्युलोकं यावत्तस्या एव सौन्दर्यं दरीदृश्यते –

अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी।
स्वर्जनन्ती सुभगा सुदंसा आन्तात् दिवः पप्रथ आ पृथिव्याः।। (ऋ. 3.61.4)

सा उषा काचिल्लावण्यमयी सुरूपवती स्त्रीसमाना प्रतिप्रातः पूर्वस्यां दिशि अतो विराजते यद्वयं तस्याः अलौकिसौन्दर्यस्य दर्शनं कुर्याम। उदीयमाना सुन्दरी उषा आत्मसौन्दर्यविस्तारलालसया स्वप्रकाशवस्त्राणि सर्वत्र तनाति। वेदेषु एषा उषादेवी पुराणी, पुरन्धिः, प्रचेताः, ऋतावरी, रोचना, सुभगा, विश्ववारा, मघोनी इत्याद्यनेकैः नामभिः विशेषमाना स्वानेकानि सौन्दर्यरूपाणि प्रदर्शयन्ती, काचित् समस्तललितकलान्विता लावण्यमयी सद्यःस्नाता नारी इव देदीप्यमाना सकलं जगत् मोहयन्ती इव प्रतिदिनं प्रातः पूर्वस्यां दिशि आयाति। तस्याः कृते या सौन्दर्यविषयकशब्दावली ऋग्वेदे वर्णितास्ति, तदत्र शोधपत्रे प्रस्तोष्यते।

## 14. रघुवंशमहाकाव्ये प्रकृतिसम्बद्धोपमानानां सौन्दर्यम्

डा० मदुगुला अनिल कुमार
प्रवक्ता तथा विभागाध्यक्ष, संस्कृतविभागः, एस.वी.आरियेण्टल डिग्री एण्ड पी.जी. कालेज, तिरुपति

काव्यसौन्दर्यापादकाः अनेके भवन्ति। तेषु "सौन्दर्यमलङ्कारः" इति वामनोक्तिः। "काव्यशोभाकरान्धर्मानलङ्कारान् प्रचक्षते" इति दण्डी । तत्राप्यर्थालङ्कारेषु–

उपमैका शैलूषी सम्प्रोप्ता चित्रभूमिकाभेदान्।
रञ्जयति काव्यरङ्गे नृत्यान्ती तद्विदां चेतः।। "

इत्यप्पयदीक्षितस्य वचनमत्र स्मरणमर्हति। इयमुपमाऽलङ्कारिकैरलङ्कृतिसम्राज्ञीति प्रचक्षते। कालिदासोऽतिमानुषप्रज्ञाशालीति जनश्रुतिरपि श्रूयते। सरस्वत्येव शापवशाद् भूलोके पुंरूपेणाविर्बभूवेति केचन पण्डिताः विश्वसन्ति। कालिदासस्य रचनासु आद्यन्तमन्तस्प्रोत इव प्रतिभा प्रतिभासते। कालिदासरचनायामुपमालङ्कार – रचनासौन्दर्यं परिशील्यैव पण्डिताः तं "उपमा कालिदासस्य" इत्यस्तुवन् ।

बहूनि काव्यानि सन्ति, किन्तु कालिदासस्य रघुवंशमहाकाव्ये यावतो रसपरिपाकस्य निर्वाहोऽस्ति सोऽन्येषां काव्येषु न दृश्यते। प्रायः प्रतिसर्गं प्रकृति – वर्णनं रमणीयं रुचिमापादयति।

सञ्चारिणी दीपशिखेव रात्रौ, यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे, विवर्णभावं स स भूमिपालः।। (६.६७)

इन्दुमत्याः स्वयंवरो महता समारोहेण प्रवर्तते। यथा रात्रौ सञ्चारिणी दीपशिखा राजपथस्थास्याट्टस्योपकण्ठं नीयते, स दीपालोकेन विद्योतते तस्यामन्यत्र नीतायां स पुनस्तमसावृतो भवति तथैव पतिंवरेन्दुमती यदा यं यमनीयाय तदा स स आत्मानमेव सा वरिष्यतीति ह्लादते स्म। हर्षनिर्भरस्य तस्य वदनं क्षणमात्रं समुल्लसति स्म। यदा तु सा यं यं व्यतीयाय तदा स स पार्थिवो विच्छायवदनोऽभवत्। अयमुपमालङ्कारः सुधासिक्ता मञ्जरीव मनोहरो भवति। अनेनैव चमत्कारविशेषोपमानेन कालिदासः "दीपशिखा कालिदासः" इति प्रसिद्धिमवाप। कालिदासः स्वकाव्येषु भारतीयधार्मिकपद्धतयः हृदयाह्लादकरं निक्षिप्तवान्। तद्यथा –

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः।।(१.१६)

दिलीपः तेजःप्रतापादिभिः कुलशीलदाक्षिण्यादिभिश्च राजगुणैः आश्रितानां समुद्र इव जलजन्तुभिः रत्नैश्चानभिभवनीयश्चाश्रयणीयश्चासीत्। दिलीपः सूर्यवंशोद्भवत्वात् तेजःप्रतापैः, राजधर्मानुगुणं दयादाक्षिण्याभ्यां विराजते इति चास्मिन् श्लोके समुद्रोपमानेन ध्वनिर्व्यज्यते। तथैव –

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।
क्षणमात्रं ऋषिस्तस्थौ सुप्तमीन इव ह्रदः ।।(१.७३)

दिलीपेन सन्तानहीनतां विज्ञापितः वसिष्ठः निश्चलाक्षस्सन् क्षणमात्रं सुप्तमीनो ह्रद इव तस्थौ। अत्र वसिष्ठनेत्रयोः मीनोपमानं लोचनस्य स्वाभाविक चाञ्चल्यस्वभाव परित्यागेन मुनेरेकाग्रचित्तं सूचयति। महर्षीणां स्नानेन ह्रदजलानि पावनानि भवन्ति। महर्षेः ह्रदोपमानेन तस्य मनश्शरीरयोश्शुध्दिर्जायतेऽत्र। अतस्तादृशमहर्षेराश्रयणेन दिलीपोऽपि पापप्रक्षालितोऽभूदिति ज्ञायते।

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या।
तदन्तरे सा विरराज धेनुः दिनक्षपामध्यगतेव सन्ध्या ।।(२.२०)

अस्मिन् श्लोके दिलीपस्य राजसगुणं दिवसा, नन्दिनी धेनोः सत्त्वगुणं सन्ध्यया, सुदक्षिणायाः तामसगुणं क्षपया च रसिकजनमनोरञ्जनं वर्णितवान् कविः। एवं सन्दर्भेषु परिसरेषु स्थितान्येव वस्तून्यादायोपमितिनिर्वहणं कालिदासस्योपमा –लङ्कारेषु विशेषः। तादृशान् समीक्ष्य पत्रं समर्प्यते ।

## 15. शूद्रकप्रकरणस्य कला सौन्दर्यं च

प्रो. मंजुश्री श्री. नेव्हल
बा.दा.कला आणि वाणिज्य महाविद्यालय, यवतमाळ 445001 (महाराष्ट्र)
मो.नं. 09405709367

अखिलविश्वस्य पुरतः विद्यमान निधि अस्ति संस्कृतसाहित्याकृतिः। संस्कृतसाहित्ये सृष्टिसौंदर्याणां तत्कालिन् सामाजिकपरिस्थितीविषयकाणां वर्णनं लभ्यते। एतस्मात् वर्णनात् वाचकैः आनन्दं लभ्यन्ते। एतादृशी आनन्दं या ददाति सा कला। कला शब्दस्य प्रयोगः सर्वप्रथमं मिलति ऋग्वेदे।

यथा कलां यथा शफं यथा ऋणं स नयामसि। (ऋग्वेद 8.47.13)

नाट्यशास्त्रस्य जनकः भरतमुनिः आधुनिकार्थेन कलाशब्दस्य प्रयोगः करोति– **न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।** एकादशशतके क्षेमेन्द्रस्य कलाविलासग्रन्थे कलायाः भेदानां सूचिः विद्यते। 64कला तथा च 14 विद्या एषा अस्माकं प्रचीना परम्परा। या कला विद्यते तद् रूपके अपि दृश्यते। रूपकस्य दश भेदाः सन्ति। शूद्रकविरचिते **'मृच्छकटिकं'** प्रकरणे केनचित् कलानां उपयोगः दृश्यते।

'मृच्छकटिकम् एतद् शूद्रकस्य एकमेव कलाकृतीः। किन्तु सा एकया कलाकृत्या एव ख्याति प्राप्ता। 'मृच्छकटिकम्' प्रकरणस्य रचनाकालः ई.पू. 300तः ई.पू. 600पर्यन्तं दोलायमानमस्ति। मृच्छकटिके निम्नलिखिताः कलाः संदृश्यन्ते –

**1) गायनकला–** रेभिलः गायकः आसीत्। तस्य गीतश्रवणार्थं चारूदत्तः अहर्निशं स्थित्वा गीतं अश्रृणोत्। रेभिलस्य गायनकलायाः प्रशंसा स्वयं चारुदत्तः करोति–

तं तस्य स्वरसंक्रमं मृदुगिरः शिष्टञ्च तन्त्रीस्वनं
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम्।
हेलासंयमितं पुनश्च ललितं रागाद् द्विरूंचरितं।
यत्सत्यं विरतेऽपि गीतसमये गच्छामि श्रृण्वन्निव।।(मृच्छकटिकम् 3.5)

**2) चित्रकला –** वसन्तसेना चारुदत्तस्य चित्रं रेखाटयति। पाषाणस्य तथा च काष्ठस्य सहाय्येन प्रतिमानिर्माणं अपि कर्तुं शक्यते। पराभूतसंवाहकः मूर्तिविरहिते मन्दिरे काष्ठप्रतिमासदृशं निश्चलभावेन स्वयं तिष्ठति।

**3) चौर्यकला** –शर्विलकसदृशः सुशिक्षितः पुरुषः चौर्यकलायां निपुणः।

**4) द्यूतकला –** यः द्यूतकलायाः एकवारम् उपयोगं करोति तस्मै कलैषा बहु रोचते द्यूताय यतते च। संवाहकः कथयति –

कत्ताशब्दो निर्नाणकस्य हरति ह्वदं मनुष्यस्य।
ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य।। (मृच्छकटिकम् 2.5)

**5) वाक्केली –** चारुदत्तः सद्गुणानां स्रोतः शकारस्तु दुर्गुणानाम्। शकारस्य संवादेन श्रोतृणां मनोरञ्जनं भवति। स्वबहुज्ञतायाः प्रगटीकरणार्थं सः विसंगतपौराणिकोदाहरणानि ददाति यथा –

किं भीमसेनो जमदाग्निपुत्रः कुन्ती सुतो वा दशकन्धरो वा।
एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोति। (मृच्छकटिकम् 1.29)

एतादृशी कलायाः उपयोगेन 'मृच्छकटिकम्' प्रकरणग्रन्थस्य सौन्दर्यं वर्धते।

## 16. संस्कृतवाङ्मये वृक्षायुर्वेदकला

डा. धनञ्जयवासुदेवद्विवेदी
सहायकप्रोफेसरः, संस्कृतविभागः, राँचीमहाविद्यालयः, झारखण्डः

संस्कृतवाङ्मये वर्णितासु कलासु मध्ये एका वृक्षायुर्वेदकला वर्तते। आयुर्वेदः यथा पुरुषार्थसाधकोपकरणस्य शरीरस्य स्वास्थ्यरक्षणाय आरोग्यसम्पादनाय च प्रवर्तते तथैव **वृक्षायुर्वेदः** वृक्षाणां स्वास्थ्यसम्पादनाय तत्संवर्धनाय च प्रवर्तते। मानवशरीरे इव वृक्षेष्वपि वातपित्तकफनामकाः त्रिदोषाः शास्त्रेषु निरूपिताः। मनुष्याः यथा त्रिदोषवैषम्येण धातुवैषम्येण च रुग्णा भवन्ति तथैव वृक्षा अपि त्रिदोषवैषम्येण रोगग्रस्ता भवन्ति। संस्कृतवाङ्मये ऋग्वेदे तथा अथर्ववेदे च वृक्षशास्त्रसम्बद्धोल्लेखनादिकमुपलभ्यते। अग्निपुराणे वृक्षायुर्वेदः निरूपितः। वृक्षाणां पुष्पफलसम्वर्धनादिकमधिकृत्य तत्र विषयप्रस्तावः कृतः। बृहत्संहितायां वृक्षायुर्वेदनामके अध्याये वृक्षान् अधिकृत्य विविधानि वर्णनानि प्राप्यन्ते। तत्परं शाङ्र्गधरसंहितायां 'उपवनविनोद' नामकः कश्चन अध्यायः परिलक्ष्यते। अध्यायेऽस्मिन् वृक्षाणां वैशिष्ट्यं नानावृक्षारोपणार्थमुचितभूमिचयनं वृक्षवर्गीकरणं,जलसेचनं, भूमिपरीक्षा, वृक्षपालननियमाः वर्णिताः। अस्मिन् शोधालेखे वृक्षर्जातेः वर्गीकरणम्, आकृतिविज्ञानं, क्रियाविज्ञानं इत्यादिकानि तथ्यानि विवेचितानि भविष्यन्ति। वृक्षाः कथं रोगग्रस्ताः न भवेयुः अस्य विवेचनमपि भविष्यति। रोगग्रस्तानां पादपानां चिकित्सा कथं भवेत्, अस्यापि विवेचनं अत्र भविष्यति।

## 17. ऋग्वेदे काव्यसौन्दर्यम्

(शब्दालंकारस्य विशेषप्रसंगे)

डॉ0 मिताली देव
संस्कृतसंभागः, महिलामहाविद्यालयः, काशीहिन्दूविश्वविद्यालयः

याथातथ्येनोक्तं खलु वर्ड्सवर्थमहोदयेन– प्रबलभावधाराया हृत्पटलतस्सद्यस्समुच्छलनमेव वास्तविकं काव्यं भवतीति। वस्तुतस्समाजस्य शैशवावस्थायामेव कविवृद्धा वसन्ति। ऋषेरावेगोद्गीर्णोद्गारान् देवताः प्रति प्रापयन्तीम्–

**ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे।**
**व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं में अस्य रोदसी।।** (ऋग्वेद 1/105/15)

इत्यृचमुदधृत्य आर0एन0दाण्डेकरमहोदयो वैदिककविताया अन्तःप्रेरणायास्तुलनाम् आँग्लीयरोमाण्टिककवितया करोति। ऋग्वेदे निसर्गसुन्दरं काव्यं वरीवृत्यते। काव्येऽस्मिन्नपि प्रणयिनामुल्लासो विरहिणां विलापो वीराणामुद्घोषो भक्तानामुद्गारश्शब्दानां सौष्ठवम् अर्थानां गाम्भीर्यं भाषायाः सालङ्कृतत्वं भावानामूष्मा सुतरामाविष्करोति कविताकामिन्या विलासं हासं च। तद्धि भावामुद्दीपनमनुरंजनमलंकरणंचांजसाऽऽचामति। तत्रोच्चारणे झङ्कृतिरौज्वल्यमर्थप्रौढिरुक्ति–विचैत्र्यमग्राम्यत्वं स्वाभाविकत्वं शब्दगुम्फश्च सम्यग् भावोद्दीपनमापाद्य सुतरां रसचर्वणामाकलयति। औपम्यविवर्ततयानेकेऽर्थालंकारा अत्र स्वां छटामाविष्कुर्वन्ति। पदे–पदे वर्णावृत्तिः पदावृत्तिः पादावृत्तिर्भाव–संगोपनमभिधेयवक्रता च, अनुप्रास– पुनरुक्तवदाभास–यमक–पुनरुक्तप्रकाशादिशब्दलंकारान् उद्भावयति। मानवीकरणस्य यादृक् प्राकृतिकं समुज्ज्वलं निष्कलंकंचोदाहरणमत्र काव्ये दृग्गोचरीभवति, न तादृग् विश्वसाहित्येऽन्यत्र। विशेषतश्च देव्युषा अनिन्द्या त्रिभुवसुन्दरीवात्र काव्यरंगमंचे समुपस्थिता रंजयति लोकचक्षूंषि विकासयति च सहृदयानां हृदयारविन्दानि। देवः सूर्य उषोरमणीसौभाग्यभोगग्यवान्। तदेवमुषःसूक्तेषु श्रृंगाररसस्यछटा दर्शनीयैव।। तथाहि–

**कन्येव तन्वा3 शाशदानाँ एषि देवि देवमियक्षमाणम्।**
**संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती।।**(ऋग्वेद 1/123/10)

एवमलंकाराः काव्योत्कृष्टताया महत्त्वपूर्णं साधमस्ति। रसाभिव्यक्तौ साहाय्यमापादयतां तु तेषां बहिरंगत्वं वक्तु न शक्यते। उक्तं ह्यभिनवगुप्तपादैः– **'न तचेषां बहिरंगत्वं रसाभिव्यक्तौ'** (ध्वन्या0, पृ0 147) इति। एवं खल्वलंकारा न केवलं वाण्या बाह्यमलंकरणमात्रं प्रत्युत भावाभिव्यक्तेर्भवन्ति विशिष्टानि द्वाराणि। भाषायाः पुष्ट्यै रागस्य च पूर्णतायै उपादानभूतास्सन्ति। भिन्नानां स्थितीनां पृथक् स्वरूपाणि विद्यन्ते।

**समानमस्मा अनपावृदर्च क्ष्मया दिवो असमं ब्रह्म नव्यम्।।**इति।(ऋग्वेद 10/89/3)

सूर्यदुहितुः कल्पना सरस्वत्याः कल्पना चापि वैदिककवेः काव्यीयचेतनामाविष्करोति।

एवं खलु न केवलम् ऋग्वेदे काव्यतत्त्वानाम् अस्तित्वमेव प्रत्युत तस्य काव्यत्वमपि सिद्ध्यति। अतो विविधकाव्यत्त्वानां दृष्ट्या ऋग्वेदस्यामूलचूलमध्ययनं नितरामावश्यकमेवेत्यस्माकं दृढा मतिः। तच्चाध्ययनं बहुभिर्विद्वद्भिरल्पाधिकतया प्रस्तुतमपि भूयो विस्तरमपेक्षते।

## 18. संस्कृतानुसर्जनसौन्दर्यम्

**डा0 नारायणदाशः**
विभागाध्यक्षः, संस्कृतविभागः, रामकृष्णमिशन अवासीयमहाविद्यालय (स्वायत्तशासी) नरेन्द्रपुर, कलकत्ता 700103
dashnarayana72@gmail.com,9432469547

संस्कृते इदानीन्तनमनूतिदतसाहित्यं स्वीयं नव्यं भव्यं च प्रस्थान्न निर्माति इतरभाषानिरवद्यकाव्यास्वादेन तत्समशब्दप्रयोगचमत्कारेण च । मौलिकसंस्कृतसाहित्यस्य समान्तरालेन क्वचिदणिकतया वा प्रसरति अनूदितसंस्कृतसाहित्यमिति कथयितुं शक्यते प्रचुरमनूदितसाहित्यं दृष्ट्वा। कालिदासाद् परम् आपामरचाण्डालं यावत् परिव्याप्तः काव्यसंसारः रवीन्द्रनाथस्येव इति जानीमो वयम् । तत्काव्यकुतूकिनः संस्कृतकवयः तदा तदा रवीन्द्रनाथस्य काव्यानि अनूदितवन्तः। केवलं संस्कृते गीतांजलेः पंचविशत्यधिकाः अनुवादाः राराजन्ते इति अहोभाग्यं भाषाकवेरस्य । एतदपि जानीमो वयं यद्गीतांजलिरिति काव्यसंग्रहस्तस्य 1913कैस्ताब्दे नोबेजप्रशस्तया सभाजितः । तत्र तस्य अनुवाद एव कारणमासीत् । अनुवादोऽपि एका कलैव, यां परिचिनोति सहृदयः कविरनुवादको वा । यदर्थं विश्वकवेरनुवादं न्यक्कृत्य परिष्कारो कृतः कविना इयेवर्येण समकालिकेन उइलियमराडिके वर्येण । अतः काचिदस्मास्था वर्तते अनुवादपरम्परायाम् । जानीमो वयं यत् विश्वेऽस्मिन् भाषाणां संख्या अगणिता । प्रत्येकस्यां भाषायां च विरच्यते साहित्यं तत्तद्युगानुरोधेन । तेषां ज्ञानार्थमनुवाद एव शरणम् । अतः अनूदित साहित्यस्य चिन्तनं मननमपि एकस्मिन् जन्मनि कर्तुं न शक्यते, किं पुनः एकस्मिन् पत्रे । एषा परम्परा नित्यं नवनवरूपेण प्रचलिता स्थास्यति । एतावत्पर्यन्तमनूदितस्य साहित्यस्य एका सुविस्तृता सूची केनापि प्रस्तुता चेत् गवेषकाणां सौविध्यं भविष्यति । सर्वेषां मूललेखकानां यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः –

उक्तं चापि ध्वन्यालोककारेण –

**अतो ह्यन्यतमेनापि प्रकारेण विभूषिता ।**
**वाणी नवत्वमायाति प्रकारान्तरवत्यपि ।।** (4.2)
**दृष्टपूर्वा अपि ह्यर्था काव्ये रसपरिग्रहात् ।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ।।** (4.3)

सत्यमुक्तं समीक्षकेण भागरथिनन्देन – अस्माभिः ज्ञायते यत् अनुवादेन न केवलं भाषानुवादमात्रप्रदर्शनं भाषाघटाटोपस्थान वा, अपि तु अनुवादो नाम भाषारसभावपरिवेषविषयाभिप्रायादनुवाद एव । अतः यथा अवधानवान् कविः काव्यरचनायां, तथैव सावधानः स्यादनुवादकोऽनुवादे (सागरिका, 37, 3–4 पृ.92)। अतः अस्मिन् पत्रे अनुवादसौदर्यं परिशीलनतत्परा वयं तदंगतया अनुवादे मूलभाषासौन्दर्यं, लक्ष्यभाषासौन्दर्यं अलंकारसौन्दर्यं, भावसौन्दर्यं, शैलीसौन्दर्यमननुवाद्यशब्दसौन्दर्यं च विचारयामः ।

## 19. श्रीमद्वाल्मीकिरामायणे भावचित्राणि

डा. श्रीमतिद्व यम्. प्रफुल्ला
असोसियेटप्रोफेसर, श्रीसत्य साईं इन्स्टिट्यूट् आफ हायरलर्निंग, अनन्तपुरम् , आन्ध्रप्रदेशः

**भावचित्राणि –** विंशतिशताब्ध्याम् अमेरिका, इंग्लैण्ड इत्यनयोः पाश्चात्यदेशयोः कविभिः प्राचीनकाल्पनिकसाहित्ययोः विरुद्धं Imagism नामको भावचित्रसिद्धान्त आविष्कृतः। सुदीर्घकथाकथनं, वर्णनाश्च रसभंजका इति तेषां मतम् । भावचित्रानुवादानुयायिनः कवयः 1914–1917 त्रिषु वर्षेषु त्रयः कवितासंपुटाः प्रचारितवन्तः। एते कवयः ऊहासामर्थ्येन, उपमाद्यलंकारप्रयोगेण अत्यन्तं .संक्षिप्तेषु काव्येषु भावचित्राणि प्रादर्शयन्। नास्त्येष नूतनप्रयोगः। प्राचीनभारतीय–श्रव्यकाव्येषु शब्दार्थालंकाराणां प्रयोगस्य उद्देश्यं भावचित्राणां कल्पना अस्ति।

दृश्यकाव्ये पात्राणां अलंकारचेष्टादिभिः, सन्निवेशकल्पनया, सम्भाषणैः च प्रेक्षकाणां हृदयं रसोन्मुखं भवति। पठनश्रवणाभ्यामपि दर्शनं बलवत्तरं, शीघ्रतया हृदयस्पन्दकं, परन्तु श्रव्यकाव्यविषये तत्सर्वं पाठकेन मनसि एव ऊहितव्यम्, मनोनेतत्राभ्यामेव द्रष्टव्यम्। तस्मात् कविः काव्यरचनायामत्यन्तं व्यग्रो भूयात्। लोके सर्वेषां जनानां सुपरिचितैः वस्तुभिः काव्यगतविषयान् दर्शयितुं यतते कविः। तदर्थं सः उपमाद्यलंकारानाश्रयते। यथा नायिकायाः मुखं चन्द्र इव रमणीयमिति कविवाक्येन पाठकः तस्याः मुखसौन्दर्यं मनोनेत्राभ्यां पश्यति, आह्लादकरामणीयत्वादीननुभवति। नायिकायाः मुखमपरिचितमपि चन्द्रस्य आह्लादकत्वं, रामणीयत्वं तस्य सुपरिचितमेव। अलंकाराणां प्राधान्यं ज्ञात्वा वामनाचार्यः – काव्यं ग्राह्यमलंकारादित्यवदत्।

शोधपत्रस्यास्य प्रधानोद्देश्यं नास्ति वाल्मीकिरामायणे अलंकारसौन्दर्यदर्शनम्। शब्दार्थालंकाराणां सहायेन वाल्मीकिमहाकविना चित्रितानां चित्राणां सौन्दर्यदर्शनमेवात्र उद्दिष्टम्। विषयानुशीलनसौकर्यार्थं सालंकारचित्राणि, निरलंकारचित्राणीति विभागः कृतः।

**सालंकारचित्राणि–**

जटिलं चीरवसनं प्रांजलिं पतितं भुवि ।
ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा ।। (अयोध्याकाण्डम्. 100.1)

वनवासिनं रामं द्रष्टुमागतस्य भरतस्य रूपमत्र – जटिलं, चीरवसनं, प्रांजलिम् इति पदैः दर्शितम्।

प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः।
प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव दृश्यते ।। सुन्दर. 1– 82

समुद्रलंघनसमये हनूमान् मेघमण्डले प्रविशन्, निर्गच्छन् चन्द्रमा इवासीत्। न केवलं स्थिरचित्रं, चलचित्रमपि कविना दर्शितम्।

**निरलंकारचित्राणि–**

तेन पादपमुक्तेन पुष्पौघेन सुगन्धिना ।
सर्वतः संवृतः शैलो बभौ पुष्पमयो यथा ।। सुन्दर ; 1– 13

समुद्रं लंघयितुमुद्युक्तः हनूमान् शरीरं ववृध्य, चरणाभ्यां महेन्द्रगिरिं पीडितवान्। अचलोऽपि सः गिरिः मुहूर्तं चचाल। तदा कम्पिताभ्यां तत्रस्थवृक्षाभ्यां पतितैः पुष्पैः पुष्पमयोऽभवन् महेन्द्रः न तु शिलामयः। पुष्पपर्वतमिव रमणीयः, सुगन्धभरितः सन् नेत्रानन्दमकरोत्। वनं गन्तुमुद्युक्तः रामः पितरं द्रष्टुं कैकेयीमन्दिरमगच्छत्।

तदा सोऽभिदुद्राव रामं दृष्ट्वा विशांपतिः।
तं संप्राप्य दुःखार्तः पपात भुवि मूर्छितः।।(अयो0. 34.17)

अत्र अभिदुद्राव शब्देन रामं प्रति गच्छतः, भुवि पततः दशरथस्य रूपं मनोनेत्रपथे चलति। एवं श्रीमद्वाल्मीकिरामायणे स्थिरचलरूपचित्राणि हृदयंगमानि।

## 20. व्याकरणशास्त्रे भारतीया कला : विशेषतः सिद्धान्तकौमुदीसंदर्भे

डॉ. तोयनिधि वैष्णवः
व्याकरणविभागाध्यक्षः, शासकीयसंस्कृतकालेज, रायपुर

काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् इति वचनात् पाणिनीयव्याकरणे कलाविषयकज्ञानं परिज्ञातुं शक्यते अष्टाध्यायीगतसूत्राणां परिशीलनेन तथ्यमिदं स्फुरति यद् भगवान् पाणिनिः सर्वासु कलासु निष्णातः आसीत् ।

भारतीयाकलान्तर्गते वाक्कलाया अपि प्राधान्यं स्वीकरोति वैयाकरणः व्याकरणशास्त्रस्य रचनाऽपि वाग्दोषापहरणाय वाग्योगविद् विधानाय संजाता इति मे मतिः । ये खलु शब्दापशब्दान् जानन्ति ते तु सर्वदा साधुशब्दानामेव व्यवहारं कुर्वन्ति तथा च साध्वसाधुशब्दयोर्मध्ये को भेदः? का च उपयोगिता किं च तात्पर्यमित्यस्मिन् विषये सम्यक्तया विदन्ति । अस्मिन् शोधालेखे सिद्धान्तकौमदयाः तद्धितप्रकरणात् विचारः क्रियते यथा **"सर्वस्य द्वे"** (सि.कौ. 8–1–1) इति सूत्राधिकारात् **"नित्यवीप्सयोः "** (सि.कौ. 8–1–4 तत्रैव 8–1–7) इत्यादिसूत्रेण आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदानां द्विर्वचनं विधीयते, तत्रोदाहरणैः द्विर्वचन–प्रयोगेण कीदृग् वैचित्र्यमायाति इति वाग्व्यवहारविदः जानन्ति यथा– पचतिपचति, भुक्त्वा–भुक्त्वा, वृक्षं–वृक्षं सिंचति, ग्रामो–ग्रामो रमणीयः अधोधोलोकम् इत्यादयः प्रयोगाः सन्ति । अनेन प्रकारेण सिद्धान्तकौमुद्याः द्विरुक्तप्रकरणस्थसूत्रानुसारेण वाक्कलासुप्रयोक्तुः कीदृशी चारुता समापतति इति विषये अनुशीलनमस्ति मम आलेखे ।

## 21. महाकविकालिदासप्रतिपादितसौन्दर्यतत्त्वम्

डॉ. विभा क्षीरसागर
सहायकप्राध्यापिका, सी.पी.आई.बेरार कालेज, नागपुर
vibhakshirsagar@rediffmail.com9657767396

अर्थोत्तमपूर्णा सुन्दरैः अलङ्कारैः भूषिता च कविकुलगुरुकालिदासगिरा सरसा अत एव हृदयस्पर्शिणी। अर्थालङ्काररीतिषु सर्वोत्तमकविकालिदाससाहित्यात् काव्यसौन्दर्यतत्त्वमवगन्तुं शक्यते।

संस्कृतसाहित्यशास्त्रे शब्दरचनारीतयः सन्ति। माधुर्य्योजप्रसादगुणानुसारं वैदर्भीगौडीकोमलाः तिस्रः रीतयः प्रसिद्धाः। रसविहीनशब्दरचना वा रसहीना अर्थचमत्कृतिः न भवति काव्यम्।

आत्मन एव हि यथा शौर्यादयो नाकारस्य।
तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम्।।

काव्यप्रकाशकारस्य मतमिदं महत्त्वभूतमेव। रसप्रकाशकमधुरप्रासादिकशब्दयुतं कालिदास– साहित्यं सुन्दरमेव।'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति नाट्याशास्त्रप्रणेतुः भरतमुनेः रसविषयकमतं प्रसिद्धमस्ति। पुष्पमालायां यथा सूत्रस्य तथैव काव्यरचनायां रसस्य स्थानमस्ति महत्त्वभूतम्।

कालिदाससाहित्ये सौन्दर्यतत्त्वमस्ति रसः। बीभत्सरसं विहाय अष्टरसपरिपोषः अनुभूयते तस्य रचनासु। द्विविधः रसराजशृङ्गारः कालिदासप्रियः। अभिज्ञानशाकुन्तले प्रथमाङ्के तृतीयाङ्के च विद्यते सम्भोगशृङ्गारः। विप्रलम्भशृङ्गारस्य उदाहरणोत्तममस्ति मेघदूतम्। कालिदाससाहित्ये सततं प्रवहती सौन्दर्यतत्त्वसरित् सन्तोषयति रसज्ञान्। ध्वन्यर्थप्रधानकालिदाससाहित्यमाह्लादकमेव। तस्य रचनानां कथानकान्यपि सुन्दराणि। तस्य कृतिषु नैके प्रसङ्गाः भौतिकरूपं विस्मार्य उदात्तवातावरणमनुभावयन्ति रसज्ञान्। तस्य साहित्यरसास्वादेन आर्द्रं भवति मानसम्। तत्साहित्ये स्त्री–पुरुष–बाल–वृद्ध–ब्राह्मण–क्षत्रीय–राजा–प्रजानां चित्राणि ध्येयात्मकतां द्योतयन्ति। आर्यसंस्कृतेः उदात्तरूपं दर्शयति कालिदासः।

शोधनिबन्धेऽस्मिन् सौन्दर्यतत्त्वस्य सविस्तरवर्णनमशक्यम्, तथापि तस्य सप्तरचनासु रसाष्टकं सोदाहरणं स्पष्टीकृत्य विश्वकविकालिदाससाहित्यसौन्दर्यतत्त्वोद्घाटनं क्रियते। स्वर्गं पृथिव्यामवतारयत् कालिदाससाहित्यम्। काव्यसौन्दर्यतत्त्वं रस एवास्तीति प्रतिपादयति महाकविः एतदेवास्ति निष्कर्षं शोधपत्रस्यास्य।

## 22. संस्कृतनाट्यसाहित्ये भारतीयायाः कलायाः सौन्दर्यस्य च तत्त्वानि

डॉ0 सुषमा मेहता
सिटिजन सोसाइटी, दिल्ली
sushmamehta25@gmail.com, 9540794044

संस्कृतसाहित्यस्य एका महती परम्परास्ति। साहित्यशब्देन यत्किञ्चिदप्यभिहितं तत् सर्वमेव साहित्येऽस्मिन् वर्तते। एतत् कथनं संस्कृतसाहित्यविषयेऽपि पूर्णतयोपयुक्तं यत् – **'यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचित्'**। एकतः संस्कृतसाहित्यं धर्मभावनयाऽऽवेष्टितमस्ति, अपरत लौकिकविषयेऽपि प्रसृतं वर्तते। अस्मिन्नेव साहित्ये, वैदिकसूक्तानामुपनिषदां, ब्राह्मणाराण्यकग्रन्थानां ज्ञानं च दृश्यते। अत्रैव महाकाव्यानां, खण्डकाव्यानां, नाटकानां च सुदीर्घा परम्पराऽपि वर्तते।

'एस्थेटिक्स' शब्दोऽयं ग्रीकभाषया गृहीतोऽस्ति। अस्यार्थः 'ऐन्द्रियसुखस्य चेतना' इत्यस्ति। 'एस्थेटिक्स' इति पदं संस्कृते सौन्दर्यशास्त्रम् इति पदेन अभिहितं वर्तते। वस्तुतः कलासौन्दर्यस्य अन्योन्याश्रयः सम्बन्धोऽस्ति। कलायाः

उत्पत्तिः सौन्दर्यबोधेन एव मन्यते। सुष्ठु उनत्ति चित्तं द्रवीकरोतीति सौन्दर्यम्। संस्कृतनाटकानि तु सौन्दर्यस्य विविधानां स्वरूपाणाम् अक्षयागाराणि सन्ति। अस्मिन् शोधपत्रे संस्कृतनाटकेषु सौन्दर्यतत्त्वानां विश्लेषणं कृतमस्ति।

## 23. रूपगोस्वामिनः विदग्धमाधवे व्रजलीलावर्णनायां सौन्दर्यचेतना


अजय कुमार मुखर्जी
गवेषकः संस्कृत–पालि–प्राकृतविभागः, विश्वभारती, शान्तिनिकेतनम्
ajoyrmukherjee1986@gmail.com


वृन्दावनस्थ–गौडीयवैष्णव–आचार्येषु अन्यतमः रूपगोस्वामी। गौडाधिपस्य हुसेनशाह इत्याख्यस्य नृपस्य सभायां मन्त्रिपदं परित्यज्य स चैतन्यदेवस्य दीक्षाग्रहणं कृतवान्। रूपगोस्वामि–प्रणीताः सप्तदशग्रन्थाः विद्वत्समाजे प्रसिद्धाः। सः एतेषु ग्रन्थेषु श्रीकृष्णस्य व्रजलीलाविषयकं विदग्धमाधवम् इति नाटकं चैतन्यमहाप्रभोः दीक्षाग्रहणादनन्तरं रचितवान्। दृश्यकाव्यमिदं वैष्णावाचार्याणां कृते परमादरणीयम्। सप्ताङ्केषु निबद्धे अस्मिन्नाटके व्रजलीलायाः यादृशं पल्लवनं रूपगोस्वामिना कृतं तत्र भारतीयसौन्दर्यशास्त्रस्य आत्मिकं तत्त्वं प्रतिफलितम्। रूपगोस्वामिना श्रीकृष्णस्य राधया सह अन्याभिः सखिभिः सह च या अपार्थिवलीला प्रस्तुता तत्र भक्तानां श्रोतृणां च अनन्या सौन्दर्यानुभूतिः आनन्दानुभूतिश्च जायते। नाटके यथा श्रीकृष्णस्य मुरलीध्वनेः माहात्म्यवर्णने, राधाकृष्णयोः सौन्दर्यवर्णने च कवेः सौन्दर्यानुभूतिः प्रकाशते तथैव श्लेषालंकारेण अर्थसूचने, व्यञ्जनाप्रयोगे, ध्वनिविन्यासेऽपि तस्य सौन्दर्यचेतनायाः परिचय उद्भासितः। सौन्दर्यस्यैकं प्राकृतिकतत्त्वमस्ति ऋतुः। एतत्तत्त्वं रुपगोस्वामिनः नाटकेऽस्मिन् स्वकीयं सौन्दर्यं प्रसारयति। वृन्दावनस्य रूपचित्रणेऽपि रूपगोस्वामिनः यत् सौन्दर्यचेतनं परिस्फुटं तत्तु अतीवं श्लाघनीयम्। यथा –

वृन्दावनं दिव्यलतापरीतं लताश्च पुष्पस्फूरिताग्रभाजः।
पुष्पाणि च स्फीतमधुव्रतानि मधुव्रताश्च श्रुतिहारिगीता।। (२।१४)

रूपगोस्वामी व्रजलीलावर्णने भक्तरूपेण प्रेमलीलायाः चित्राङ्कणं कृत्वा प्रेम्नः स्वर्गीयां नान्दनिकतां प्रतिपादयति। विदग्धमाधवे व्रजलीलावर्णने रूपगोस्वामिनः अस्याः सौन्दर्यचेतनायाः परिचयमेव मम गवेषणासन्दर्भस्य आलोच्य विषय इति दिक्।

## 24. गौडीयवैष्णवपरम्परानुसारेण श्रीकृष्णस्य नायकत्वप्रस्तुतिकला


अनुपकुमाररानो
गवेषकः,विश्वभारती शान्तिनिकेतनम्
ranoanupkumar@gmail.com 9749773628


रसस्य आलम्बनं भवति नायकः नायिका च। कविकर्णपूर आह– 'तत्रालम्बनं नायकः नायिका च" (अलङ्कारकौस्तुभः, १६६ पृष्ठम्, सं. रविशङ्करनागरः)। अत्र नायकपदे एकवचनं प्रयुक्तम्। यतः वैष्णवाचार्याणां मते केवलं श्रीकृष्ण एव नायकः। श्रीकृष्णं विना अपरः कोऽपि नायकः नास्ति। अलङ्कारकौस्तुभस्य टिप्पणीकारेण शिवप्रसादभट्टाचार्येण उक्तम्– "अत्र नायकपदे यदेकवचनप्रयोग इतरतत्र बहुवचनविन्यासश्च तत् ग्रन्थकृतो स्वसम्प्रदायिमतसम्मतिं स्फुटमावेदयति" (अलङ्कारकौस्तुभः १६६ पृष्ठम्, सं.रविशङ्करनागरः), परन्तु प्राकृतरसशास्त्रकारैः रसस्य आलम्बनरूपेण बहवः नायकाः स्वीकृताः। पारम्परिकरसशास्त्रकाराः गुणभेदेन नायकभेदं कुर्वन्ति। तैः स्वीकृता नायकाः भिन्नभिन्नगुणयुक्तास्तथा भिन्नभिन्नश्रेणीभुक्ताः भवन्ति। नायकाः भवन्ति चतुर्विधाः– धीरोदात्तः, धीरोद्धतः, धीरप्रशान्तः धीरललितश्चेति। उक्तञ्च रूपगोस्वामिना भक्तिरसामृतसिन्धौ–

स पुनश्चतुर्विधः स्याद् धीरोदात्तश्च धीरललितश्च।
धीरप्रशान्तनामा तथैव धीरोद्धतः कथितः।। (भक्तिरसामृतसिन्धुः, २–१–७६)

वैष्णवाचार्यैः केवलं श्रीकृष्णः नायकरूपेण स्वीकृतः। गोकुलेन्द्रतनयः श्रीकृष्णः सर्वनायकाधीशः सुनायकः। आचार्येण कविकर्णपूरेण उक्तम्–

सर्वशुद्धरसवृन्दकन्दलः सर्वनायकघटाकिरीटगः।
अत्यलौकिकगुणैरलङ्कृतो गोकुलेन्द्रतनयः सुनायकः।। (अलङ्कारकौस्तुभः, कारिका ५–८०)

यद्यपि धीरोद्धत–धीरप्रशान्तयोः गुणाः परस्परं विरुद्धाः तथापि श्रीकृष्णे तेषां विरोधो नास्ति। केन प्रकारेण सर्वे नायकभेदाः श्रीकृष्णे एव सम्भवन्ति, कथं प्राकृतरसशास्त्रकारैः सह गौडीयवैष्णवाचार्याणां विरोधः सर्वमेतत् आलोचयिष्यामः वयमस्मिन् शोधनिबन्धे।

## 25. लक्ष्मीदासप्रणीते शुकसन्देशे ध्वनेः सौन्दर्यम्

विश्वजित् मण्डलः,
शोधच्छात्रः, संस्कृत–पालि–प्राकृतविभागः, विश्वभारती, शान्तिनिकेतनम्।
kbjmondal@gmail.com 09153906143

साहित्यदृष्ट्या लक्ष्मीदासकवेः 'शुकसन्देशः' केरलीयसंस्कृतसन्देशकाव्येषु प्राथम्येन गणनामर्हति। लक्ष्मीदासविरचितं शुकसन्देशकाव्यं द्विधा विभज्यते, पूर्वभागः उत्तरभागश्च। अस्मिन् काव्ये कश्चिन्नायकः नायिकायाः समीपे शुकपक्षीमाध्यमेन वार्ता प्रेषयति। अस्मिन् काव्ये समग्रदक्षिणभारतस्य भौगोलिकवर्णनमुपस्थापितम्। काव्यस्यास्य नायकः लक्ष्मीदास एव। शुकसन्देशकारः लक्ष्मीदासः ईशवीयचतुर्दशशतके केरलेषु आलुवानदीतीरवर्तिक–रिङ्गम्पल्लिवासिनः कश्चन नम्पुतिरिद्विज आसीदिति प्रवादः। लक्ष्मीदासः योगशतकम्, अनुमानलक्षणम्, सिद्धान्तशिरोमणिग्रन्थस्य टीका, गणिततत्त्वचिन्तामणिः इत्यादीनां ग्रन्थानां प्रणेता। प्रबन्धेऽस्मिन् ध्वनेः प्रयोगं विचारयितुमभिलषामः। ध्वनिशब्दः अलंकारशास्त्रे बहुष्वर्थेषु प्रयुक्तः। यथा ध्वन्यते अस्मिन्निति, अधिकरणव्युत्पत्या काव्यविशेषे, ध्वनति ध्वनयति इति वा कर्तृव्युत्पत्या व्यंजके शब्दे अर्थे वा। अत एव ध्वनिकारः आनन्दवर्धनः स्वीये ध्वन्यालोकग्रन्थे उक्तवान् –

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।। (ध्वन्यालोकः 1.13)

इति कारिकया काव्यविशेषमेव ध्वनिशब्देन परिभाष्यापि 'काव्यस्यात्मा ध्वनि' इति प्रतिज्ञापद्य एव ध्वनिः शब्दस्य व्यङ्ग्ये अर्थविशेषे एव प्रयोगं कृतवान्। मुख्यतः ध्वनिः द्विधा विभज्यते। लक्षणामूलः अविवक्षितवाच्य अभिधामूलः विवक्षितान्यपरवाच्यश्च। अविवक्षितवाच्यध्वनेः द्वौ भेदौ स्तः, यथा अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्यश्च। पुनः विवक्षितान्यपरवाच्यध्वनिः द्विधा विभज्यते। प्रथमस्तु असंलक्ष्यकमव्यङ्ग्यध्वनिः इति, स तु रसध्वनिः इति नाम्नापि अभिधीयते। द्वितीयस्तु संलक्ष्यकमव्यङ्ग्यध्वनिः। अहमत्र तेषु शुकसन्देशे संलक्ष्यकमव्यङ्ग्यध्वनेः यद् वैचित्रमुपलभ्यते, तद्विषये किञ्चिदालोचयामि।

वस्तुना अलंकारध्वनेरुदाहरणं यथा–

स्थायं स्थायं तरुषु धरणीस्थायिनो वञ्जयित्वा
ग्राहं ग्राहं नयनहृदयग्राहिणीः सस्यपङ्क्तीः।
पायं पायं परिलघु पयः पद्मिनीनामजस्रं
गायं गायं पुनरपि भवान् गाहिता व्योम येषु।। (शुकसन्देश, पूर्वभागः 19)

अस्मिन् श्लोके 'पयः' शब्दे सद्योबलकरत्वमाधुर्यादिक्षीरसाधर्म्यप्रतीतेरुपमालंकारो ध्वनिरिति।

## 26. शृङ्गारप्रकाशे प्रकृत्यादिचतुष्टयशब्दानां विवेचनप्रक्रियासौन्दर्यम्

सर्वेशकुमारशान्डिल्यः
शोधच्छात्रः, संस्कृतविभागः, कलासङ्कायः, काशीहिन्दूविश्वविद्यालयः

विविधकलानामधिष्ठानं विचित्रमिदम् अखिलं जगत्। इह जगतीतले नानाकलावन्तो नानापथजुषः आश्रयभाजः मानवाः प्रातिनिध्यं कुर्वन्ति कलानाम् । ये कलानां वैचित्र्येण सर्वान् आकर्षयन्ति, सर्वोत्कृष्टञ्च प्रतिपादयन्ति। कलानामनेकत्वम् आस्माकीने संस्कृतवाङ्मये लब्धशास्त्रीयप्रमाणैः सिद्धम्। तासु नानाविधकलासु विलक्षणा काव्यकला सर्वानस्मान् अनुरञ्जयति, सम्प्रमोदयति, अभिप्रेरयति, सर्वातिशयञ्च जनयति। काव्ये येन अनुशिष्यते, उचितानुचितं निर्णीयते, परिमितिः परिधिश्च निश्चीयते तच्छास्त्रं काव्यशास्त्रम्। काव्यशास्त्रीयानवच्छिन्नाधोरणिः अग्निपुराणकारादारभ्य समायातान् मध्यवर्तिनः उत्कर्षापकर्षकालिकान् प्रत्यवायानपसार्य विहाय च आधुनिककालं यावत् स्वीयेन अमन्दानन्दसन्दोहेन अक्षुण्णरूपेण अतितमाम् अस्मान् चमत्करोति उपकरोति च। काव्यशास्त्रपरम्परायां यथाकालं स्वीयैः ग्रन्थरत्नैः समुपकुर्वन्तो नैके आचार्याः प्रतिष्ठां लभाञ्चक्रिरे। तेषु काव्यशास्त्रीयसिद्धान्तोपस्थापनेन साकं साहित्यमधिगन्तुं कवित्वसाधनायोत्कर्षाय च आचार्याश्च केचन स्वकीयं व्याकरणशास्त्रज्ञानपाटवं नैपुण्यञ्चोद्घाटयामासुः। येन ते वर्णनविवेचनादिकौशलेन काव्यशास्त्रसरण्यां विशिष्टं स्थानं दधते। तेषु प्रमुखः धारानगर्याः अधिराजः क्षितिरक्षकः, विद्यापरायणः, विपुलानां शास्त्राणां गोचरीकृतः भोजराजः। भोजस्य विलसितेषु बहुषु ग्रन्थेषु अतिविश्रुतौ द्वौ ग्रन्थौ सरस्वतीकण्ठाभरणं, शृङ्गारप्रकाशश्चेति । भोजस्य विद्याविलासस्य परिपाकः, सुविशालो महत्तमो ग्रन्थः शृङ्गारप्रकाशः अनधिकसमयात्पूर्वमेव महामहोपाध्यायरेवाप्रसादद्विवेदिनां सम्पादकत्वेन प्राकाश्यमागतः। शृङ्गारप्रकाशे षट्त्रिंशत् प्रकाशास्सन्ति। आदिषु षट्प्रकाशेषु कवित्वबुद्धिविज्ञानस्य सुसमृद्धये व्याकरणशास्त्रस्य अपरिभाषितान् शब्दान् प्रक्रियात्मकं रहस्यञ्च विशिष्टेन विवेचनादिकेन कौशलेन उपस्थापयितुं संघटते भोजराजः।

अथ च साहित्यन्नाम सहितयोः शब्दार्थयोस्सम्बन्धः साहित्यमित्युच्यते, **शब्दार्थौ सहितौ काव्यम्** (भामहः, भामहालङ्कारः, 1.16)। अर्थात् शब्दार्थयोः मञ्जुलो लालित्यपरिपूर्णस्सन्निवेशः साहित्यमामनन्ति प्रज्ञावन्तः, एवं शब्दार्थयोर्विज्ञानं साहित्यमुपकर्तुं समेधयितुं कवित्वसाधयितुञ्च साहित्यदृशा सुसाध्यमेव प्रागिति विचिन्त्य सम्प्रवर्तते भोजराजः प्रकृतग्रन्थेऽस्मिन्। भोजराजस्यानेन नैजेन विवेचनप्रक्रियाकलायाः माहात्म्येन द्रुतमेव हृदयं परिस्पन्दते। अनेन च भूयांसि अप्राप्तानि तत्त्वानि तथ्यानि च साक्षात्कृतानि। कृतमङ्गलादिको भोजः निजया शैल्या सर्वप्रथमं शब्दार्थयोः महाभाष्यकारस्य उक्तिवैचित्र्यं समर्थयामास। ततश्च शब्दार्थयोः लक्षयितुमारभते। तद्यथा—**येनार्थप्रत्याय्यते स शब्दः। यः शब्देन प्रत्याय्यते सोऽर्थः।**

अथ च लौकिकं वैदिकं च द्विरूपात्मकं शब्दं द्वादशसु शाखासु परिगणयति तदेवम्प्रकारेण— **प्रकृतिः, प्रत्ययः, उपस्कारः, उपपदम्, प्रातिपदिकं, विभक्तिः, उपसर्जनं, समासः, पदं, वाक्यं प्रकरणं, प्रबन्धाश्च।** इत्थमेतेषु द्वादशसु विभागेषु अपरिभाषितेषु चतुष्टयशब्देषु प्रकृतिप्रत्यययोः आत्मना प्रज्ञासन्धानेन परिभाषयोः निबध्नाति। तद्यथा— **प्रकृतिः—शब्दार्थभावनायां प्रथममुपादानकारणमिव योपादीयते तां प्रकृतिरिति व्यपदिशन्ति। प्रत्ययः—प्रतीयतेऽनेनार्थ इति प्रत्ययः। प्रकृतिप्रत्ययावपि त्रिषु—त्रिषु भागेषु वर्गीक्रियेते— धातुरूपाप्रकृतिः, प्रत्ययरूपाप्रकृतिः, प्रातिपदिकरूपाप्रकृतिः। धातुरूपप्रत्ययः, प्रत्ययरूपप्रत्ययः, प्रातिपदिकरूपप्रत्ययश्च।**

आचार्यः षण्णामपि प्रकृतिप्रत्यययोः प्रकाराणां षट्—षट्प्रभेदान्, तेषामप्यनेकान् प्रकारान् प्रकल्पतेतमाम् । अथ चोपस्कारः उपपदञ्च इति अव्याख्यायितयोः शब्दयोरपि स्वदृष्ट्या तितनिषन्ति शृङ्गारप्रकाशे। **प्रकृतिप्रत्ययानामुपसर्गोपग्रहागमलोपवर्णविकार— विकरणादिरूपः संस्कारः उपस्कारः। उपस्कारविशेष एव प्रकृतिसमीपोच्चारितं पदमुपपदम्।** वस्तुतः पाणिनिव्याकरणशास्त्रे उपस्कारनाम्ना गुणाधानमेवोपस्कारः इत्यन्वर्थो लक्ष्यते। परमत्र गुणाधानमेवोद्दिश्य नवरूपेण संस्कारस्य कारकानां जनकानां साधकानाञ्च तत्त्वानामुपस्कारपदेन अनविस्तरेण अङ्गीचकार भोजः। कारकेषु नावीन्यं नास्ति परं तेषाम् उद्देश्ये ऐक्येन च प्रतिपाद्ये नूत्नता संदृश्यत एव, एवम् इतस्ततः शास्त्रे प्रक्षिप्ताः सर्वेऽपि कारकांशाः एकान्वये संगृहीता अत्र प्रतिपाद्यलाघवेन । उपकारस्य उपपदस्यापि भेदत्रयाणां षट्—षट्प्रकाराः प्रकटिताः भोजराजेन। व्याकरणशास्त्रे विशेषतः सूत्रात्मके पाणिनिव्याकरणे इदमित्थमिति रीत्या शब्दानेतान्न परिभाषते, शाखाः प्रकारान् अपि न बोधयामास। शब्दार्थयोः परिज्ञानाय तदत्रैकत्रीकृतानि संसाधनानि तथ्यानि, शब्दप्रमाणैः अनधिगतम् अपरिभाषितम् अर्थविषयकञ्च वैभवं ग्रन्थेऽस्मिन् स्पष्टतामवाप्नोति। अत एव शब्देषु द्वादशसु प्रकृत्यादिचतुष्टयशब्दानामेव आचार्यदृशा परम्परामुन्मील्य सौन्दर्यस्य विवेचनप्रक्रियाञ्च लक्ष्यीकृत्य प्रस्तोष्यमाणे लघुशोधपत्रे कश्चन लघ्वायासः विदां पुरो विधास्यते।

## 27. गीतगोविन्दकाव्ये कामकला एवं रतिसौन्दर्यम्

**हरिओम तिवारी (शोधच्छात्रः)**
राष्ट्रियसंस्कृतसंस्थानम्, गङ्गानाथझापरिसरः, इलाहाबादः, उ.प्र.

**"कामस्तदग्रे समवर्तत् मनसो रेतः प्रथमं यदासीत्। (अथर्व. 19.52.1)**

श्रीमत्सच्चिदानन्दस्य महिम्ना समेषां कर्मणां मूलं कामैव वर्तते। अस्माकं जीवनलक्ष्यं पुरुषार्थचतुष्टयमपि कामोपहितं विद्यते इति श्रीभरतेन स्वनाट्यशास्त्रे निगदितम् (ना.शा. 22/96)। श्रीजयदेवमहाभागेन विरचिते गीतगोविन्दे काव्ये रसराजशृङ्गारः आमूलरूपेण दृश्यते, एवञ्च ग्रन्थेऽस्मिन् पदे—पदे कामकलायारपि प्रदर्शनमस्ति।

यथा— द्वितीयसर्गे षष्ठगीते

**निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय वसन्तम्।**
**चकितविलोकितसकलदिशा रतिरभसभरेण हसन्तम्।**
**सखि! हे केशिमथनमुदारम्,**
**रमय मया सह मदनमनोरथभावितया सविकारम्** ।। (गी. गो. 2/6/2)

श्लोकेऽस्मिन्मदनमनोरथ भावितया सविकारम् — इत्यस्य कामशास्त्रदृष्ट्या मदनमनोरथस्य विकारः स्तनप्रान्त्यादिप्रकटनम् तत्सहितं यथास्यात् तथा भावितया युक्त्या राधया, अर्थः भवति। अत्र मदनमनोरथस्य विकाराः के—के सम्भवन्ति इति श्रृंगारतिलके लभते—

"नाभीमूलकुचोदरप्रकटनव्याजेन यद्योषितां, साकाक्षं मुहुरीक्षणं स्खलितं नीवीनिबन्धनस्य च। केशभ्रंशनसंयमौ च कमितुर्मित्रादिसन्दर्शनैः सौभाग्यादि गुणप्रशस्ति कथनैस्तत्सानुरागेङ्गितम्।।" ईदृशमेव तत्रैव गीतगोविन्दे —

**चरणरणितमणिनूपुरया परिपूरितसुरतवितानम्।**
**मुखरविशृंखलमेखलयासकचग्रहचुम्बनदानम्।। 2/6/7**

अत्र सकचग्रहचुम्बनदानम्— इत्यनेन चुम्बनप्रकारं वर्ण्यते। चुम्बनविधायां कचग्रहणचुम्बनं विपरीतरते एव इति रतिरहस्ये उक्तम्—

**शृंगारे चुम्बनं कार्यं पुंसाऽलिङ्गनपूर्वकम्।**
**विपरीतरते नार्या सकचग्रहचुम्बनम्।।**

शास्त्रकारैः शृंगाररसस्य स्थायित्वेन रतिमेव मन्यते। आचार्य भरतानुसारे इयमामोदात्मकः भावोऽस्ति – अर्थात् मनोऽनुकूलेऽर्थे मनसः प्रवणनम् – रत्यस्ति। गीतगोविन्दकाव्ये दशमसर्गे एकोनविंशतितमे प्रबन्धे प्रथमश्लोके ध्रुवपदे जयदेवेन मानशब्दस्य प्रयोगं कृतम्। यस्तु रत्यवस्थां संसूचयति –

प्रिये! चारुशीले! मुञ्च मयि मानमिदानम्।। (10/19/1)

अर्थात् हे प्रिये। मयिविषये यः मानः तं परित्यज। रतिशास्त्रेषु रत्यवस्थानां विवरणे इयं मानावस्था प्रथमैव अवस्था वर्तते। अस्य विवरणं भावप्रकाशने इत्थमस्ति –

स्वातन्त्र्यं यदन्यस्य मनोरथनिरोधनम्।
स एव मान इत्युक्तो मनोरथनिरोधनम्।।
मा नेति वीप्सया रोधो मान इत्युच्यते बुधैः।।

अर्थात् गीतगोविन्दकाव्ये कामकलायाः प्रदर्शनं रतिसौन्दर्यस्य चोद्भावनं दरीदृश्यते।।

## 28. सन्द्याकरनन्दिविरचितस्य रामचरितकाव्यस्य प्रथमपरिच्छेदस्य श्लेषालङ्कारसौन्दर्यम्

काजलगुँइः
गवेषकः संस्कृत–पालि–प्राकृत–विभागः विश्वभारती, शान्तिनिकेतनम्, पश्चिमबङ्गः.
kguin1989@gmail.com 07699685718

ऐतिहासिककाव्यरचनायां द्वादशशतकस्य सन्द्याकरनन्देः रामचरितं विशिष्टमेकं स्थानं वर्तते। काव्यस्य प्रथमपरिच्छेदस्य श्लेषालङ्काराणां वैचित्रविश्लेषणं मम सन्दर्भस्यास्य विषयः। काव्येऽस्मिन् एकाधारे वाल्मीकिरामायणस्य मुख्यचरित्ररामचन्द्रस्य चरितं अन्ये च पालवंशीयनृपतेः रामपालस्य कीर्तिकलापंवर्णितम्। काव्येऽस्मिन्प्रधानतया श्लेषालङ्कारस्यैव प्राचुर्यं परिदृष्यते । श्लेषालङ्कारस्य लक्षणविषये साहित्यदर्पणकारेण विश्वनाथेनोक्तम् – श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।।

अतः तन्मते अनेकार्थवाचकपदेन अनेकार्थाभिधानं श्लेषः इति । अस्मिन् रामचरितकाव्ये श्लेषालङ्कारस्य प्रयोगः यथा–

श्रीः श्रयति यस्य कण्ठं कृष्णं तं विभ्रतं भुजेनागम् ।
दधतं कं दामजटालम्बं शशिखण्डमण्डनं वन्दे।। (रामचरितम् –१/१)

अत्र 'विभ्रतं भुजे नागम्' इतिवाक्यांशे द्वे अर्थे प्रतिपादिते । महेश्वरपक्षे भुजे नागं विभ्रतं, वासुदेवपक्षे तु भुजे नागं गोवर्द्धनाख्यं पर्वतं विभ्रतम् । अतः 'विभ्रतं भुजे नागम्' इत्थ श्लिष्टवाक्यांशप्रयोगेण सन्द्याकरनन्दि अर्थस्य युगपत् वर्णनं कृतवान्। अस्य रामचरितकाव्यस्य प्रथमपरिच्छेदावस्थितानां कतिपयश्लेषालङ्काराणां वैचित्रविश्लेषणं मम सन्दर्भस्यास्य विषयः।

## 29. रसमञ्जरीकृतस्य सखीलक्षणसौन्दर्यम्

कृष्णविश्वासः
गवेषकः, संस्कृत–पालि–प्राकृत–विभाग, विश्वभारती, शान्तिनिकेतनम्,
krishnabiswas1988@gmail.com

षोडशशतकस्य आलंकारिकः भानुदत्तमिश्रः तस्य रसमञ्जर्याम् भारतीयसौन्दर्यतत्त्वस्य गभीरम् उन्मेषं विदधाति। भानुदत्तमिश्रेण प्रचलितरीतौ नायकनायिकयोः वर्गीकरणं कृत्वा शृङ्गाररसस्य आलोचनं कृतम्। ग्रन्थेऽस्मिन् भारतीयरसतत्त्वस्य भारतीयसौन्दर्यतत्त्वेन सह महत्त्वपूर्णं सम्मेलनं कृतमस्ति। 'रसमञ्जरी'इत्याख्ये ग्रन्थे नायिकाभेद–नायकभेद–नायिकासहाय–नायकसहाय–शृङ्गाररसादयो विषया आलोचिताः। तत्र नायिकोपयोगिनीं सहचरणशीलां सखीं लक्षयति– विश्वासविश्रामकारिणी पार्श्वचारिणी सखी।
अनन्तरम् उदाहरणेन सखीकर्मणां निर्देशोऽपि कृतः।।

ग्रन्थस्योपरि द्वादशसंख्यकाः टीकाः उपलभ्यन्ते। तेषु प्रख्याततटीकाकारेण नागेशभट्टेनापि 'प्रकाश' नाम्निटीका रचिता। अयं हि भट्टमहाभागः महाराष्ट्रीयः ब्राह्मण आसीत्। 'रसमञ्जरी'ति नामकस्य ग्रन्थस्य विविधवर्णनीयविषयेषु अन्येभ्यः टीकाकारेभ्यः नागेशभट्टकृतायां व्याख्यायां स्वातन्त्र्यं परिलक्ष्यते। तेषु रसमञ्जरीकृतस्य सखीलक्षणस्य नागेशकृतं यद् विश्लेषणम्, तदेव मे सन्दर्भस्य विषयः।

## 30 वाक्यतत्त्वावलोकनम्

मधुसूदनः
शोधच्छात्रः, व्याकरणविभागः, संस्कृतविद्याधर्मविज्ञानसंकायः

लौकिकव्यवहारेऽर्थप्रतिपत्तिर्वाक्येनैव गम्यत इति सुतरामुपपन्नं सर्वसम्मतञ्च। तत्त्वस्योनमीलनं प्राक्काले एवाभवत्। तत्र वाक्यस्वरूपनिर्धारणे विदुषां मतवैविध्यं दरीदृश्यते। संस्कृतव्याकरणे वाक्यशब्दस्य प्रयोगस्त्रिष्वर्थेषु मतिमतां दृग्गोचरीभवति।

1–विग्रहवाक्यार्थे यथा–राजपुरुषः = राज्ञःपुरुषः।
2–लौकिकवाक्यार्थे यथा–विश्वदेव ओदनं पचति।
3–पारिभाषिकार्थे निघातादिव्यवस्थार्थं शास्त्रीयवाक्यलक्षणं वाक्यशब्देन व्यवह्रियते।

प्रायः समेभ्यः पूर्वं पारिभाषिकवाक्यलक्षणं वार्तिककृताऽकारि। यतो ह्यस्य वाक्यलक्षणम् अपूर्वमिति पतञ्जलिनोदाहारि। तद्यथा– **इदमद्यापूर्वः क्रियते वाक्यसंज्ञासमानवाक्याधिकारश्च।**

अपूर्वशब्देन ज्ञायते यदेतादृशं वाक्यलक्षणं पूर्वं न लब्धावकाशम्। कात्यायन एव वाक्यकारेत्यपर–संज्ञयाऽप्यवबुद्ध्यते। वाक्यलक्षणनिर्माणेन कात्यायननामसंज्ञायां हेतुः स्यात्। यथाहि– **वाक्यं विवरणं वार्तिकं च**

यत्करणात्कात्यायनो वार्तिककार इत्युच्यते। व्याकरणसम्प्रदाये भर्तृहरिणा कात्यायनस्य वाक्यलक्षणं शास्त्रीयवाक्यलक्षणमुपात्तम्। तद्यथा–**निघातादिव्यवस्थार्थं शास्त्रे यत् परिभाषितम्**

कैयटेनापि स्वीकृतमिदम्– **नानाकारकान्निघातादिनिवृत्तये, क्वचित् प्रवृत्तये च समानवाक्ये निघातयुष्मदादेशा वक्ष्यन्ते। तत्र लौकिकवाक्यग्रहणनिषेधार्थं वाक्यं परिभाष्यते।**

कात्यायनेन वाक्यलक्षणं निगदितम्–**आख्यातं साव्ययकारकविशेषणं वाक्यम्। एक तिङ्।** भाष्यकारेण व्यावृण्वताविवक्षितम्, तद्यथा– **आख्यातं साव्ययं सकारकं सकारकविशेषणं वाक्यसंज्ञं भवतीति वक्तव्यम्। साव्ययम्–उच्चैः पठति। नीचैः पठति। सकारकम् – ओदनं पचति। सकारकविशेषणम्– ओदनं मृदु विषदं पचति। सक्रिया विशेषणं चेति वक्तव्यम्। सुष्ठु पचति। अपरमाह– आख्यातं सविशेषणमित्येव। सर्वाणि ह्येतानिक्रियाविशेषणानि। एकतिङ् वाक्यसंज्ञं भवतीति वक्तव्यम्। ब्रूहि ब्रूहि। एकतिङितीत्यत्रैकशब्दः समानवचनो न तु संख्यावाचीति।**

## 31. शुक्रनीतिनिहिते मूर्तिकलाविचारे सौन्दर्यतत्त्वानि

**मंजुषा**

साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः इत्यनेन मानवजीवने प्रोक्तं कलानां महत्त्वं सर्वविदितमेव । तेन ही भारतीयसंस्कृतवाङ्मयेषु नानाविधकलानां न केवलमुल्लेख अपि तु तासां सौन्दर्यतत्त्वान्यपि सन्दृश्यन्ते । यतो हि ऋते सौन्दर्यात् कला चैतन्यरहितदेहतुल्या । अपि च कलया विना सौन्दर्यस्यापि नास्ति अस्तित्वम् । एवं कलासौन्दर्ययो अन्योन्याश्रयत्वम् ।

एवमेव शुक्रनीतिग्रन्थेऽपि शुक्राचार्यैः मूर्तिकलाविचारः यदा समुपस्थापितः तदा तत्र सौन्दर्यतत्त्वानि सहजतया समाविष्टानि जातानि । तेषामेव चर्चा शोधनिबन्धेऽस्मिन् क्रियते ।

मूर्तिकलाविचारे प्रतिमानिर्माणाय आवश्यकानि उपादानानि रम्यत्ववर्धनाय 'अनिवार्याणि लक्षणानि च शिल्पकारेण वा प्रतिमाकारेण निश्चयेनावगन्तव्यानि । यतः 'शास्त्रमानेन यो रम्यः स रम्यों नान्य एव हि' इति शुक्राचार्यविधानम् । अतः शास्त्रमानविहीना मूर्तिः निस्सन्देहम् अरम्यैव । यथोक्तावयवैः पूर्णा पुण्यदा सुमनोहरा प्रतिमा भवितुं मूर्तिभेदेन युगभेदेन च प्रतिमानामुन्नतत्वम्, आयतत्वं, तदङ्गानां सुविस्तरं परिणामं चेत्यादीनि सौन्दर्यतत्त्वानि किमर्थं कथं च मूर्तौ समावेशितानि स्युरिति विशदीक्रियतेऽत्र। यथा –

**चतुर्दशाङ्गुलौ पादौ ह्यङ्गुष्ठो द्वयङ्गुलो मतः ।**
**सार्द्धद्वयोऽगुलो ङ्ग्युष्ठस्तन्मिता वा प्रदेशिनी ।।**
**प्रदेशिनी द्वयङ्गुला तु सार्द्धाङ्गुलमथेतरा। ।। (शु.नी 4/4/100)**

श्लोकेऽस्मिन् पादाङ्गुलपरिणामं प्रदत्तमस्ति । मूर्तेः औचित्यमिती सौन्दर्यतत्त्वं साधयितुं परिमाणमपेक्ष्यते । अन्यथा सा मूर्तिः नित्यम् आयुर्धनहरा दुःखविवर्द्धिनी च स्यादिति प्रतिपाद्य चारुत्वमाहात्म्यं निरूपितम् ।

इत्थं मूर्तिकलायाः दृष्टिपथौ आगतानि विविधानि सौन्दर्यतत्त्वानि शोधपत्रेऽस्मिन् मया सप्रमाणं विवेचितानि ।

## 32. शब्दतत्त्वप्रकाशाख्याप्रकाशिते हस्तलेखे धात्वर्थनिरूपणे वर्णनसौन्दर्यम्

**मनोजकुमारपयासी**
शोधच्छात्रः, गंगानाथझापरिसरः, इलाहाबादः

सर्वशास्त्रोपकारकं व्याकरणमिति समर्थितमस्ति विदुषां परिषदा। व्याकरणमधीताः संस्कारवशेन शास्त्रान्तरेषु सौलभ्येन प्रवृत्तिं लभन्ते इति निश्चप्रचमेव सिद्धम्। व्याकरणशास्त्रं स्वकलाविलासेनास्मान् अनुरञ्जयति सम्प्रत्यपि। अष्टव्याकरणेषु प्रसिद्धं सर्वमान्यं रहस्यात्मकं पाणिनीयं व्याकरणं प्राक्कालादेवास्मदीयं तिमिरापूरितहृदयं विप्रकाशते।

व्याकरणशास्त्रे शब्दार्थनिर्णायकं व्याख्यानमपि सौन्दर्यातिशयं तनुते। एवञ्च वर्णनकलायाः व्याकरणशास्त्रपरम्परायां किमपि विशिष्टं निदर्शनमुपलभ्यते। पाणिनिव्याकरणस्याभ्युदये विविधाः आचार्याः स्वकीयाननेकान् ग्रन्थान् विरचयामासुः। तेष्वेव आचार्यइन्द्रदत्तोपाध्यायस्य कर्तृत्वं शास्त्रस्य गौरवं जनयति। आचार्यस्य कालः सुनिर्धारितो नास्ति परं तेषां स्थितिः इतिहासविद्भिः सप्तदशशताब्द्यां मन्यते। एतेषामनेके विविधशास्त्रसम्बद्धाः ग्रन्थाः सन्ति ये सर्वेऽपि प्रकाशं न प्राप्ताः, तेषां हस्तलिपयः एव ग्रन्थागारेषु शैक्षणिकसंस्थानेषु च संरक्षणं प्राप्यन्ते। तेषु प्रमुखाः ग्रन्थाः– 1.ज्योतिषरत्नमादिधितः, 2. महिम्नस्तवव्याख्या, 3.कौस्तुभगुणः, 4.सिद्धान्तकौमुदीगूढफक्किका, 5.स्वरविवृतिः, 6.संवादचिन्तामणिः, 7.शब्दतत्त्वप्रकाशः इत्यादयः प्रमुखाः अप्रकाशिताः ग्रन्थास्सन्ति। एतेषु व्याकरणशास्त्रस्य प्रक्रियायाः निष्पादकः महत्तमो ग्रन्थः शब्दतत्त्वप्रकाशः गंगानाथझापरिसरस्य ग्रन्थभाण्डारात् रूम्प्राप्तः। यस्मिन् आचार्यः सरल–सुगम–सुबोध–सुलाघव–गद्यात्मकशैल्या धात्वर्थ–कृदन्त–समास–तद्धित–स्फोटादिदुरूह–दुर्बोध–शास्त्रीय–विषयाणां विशदं कलायितं विवेचनं प्रतिपादयति। येन लघीयसि ग्रन्थ एव व्याकरणशास्त्रस्य महद्विषयः प्रकाशमवतरति। आचार्योपाध्यायः व्याकरणशास्त्रीयप्रक्रियापरम्परां नानुसरति, अपि तु प्रत्ययरूपमेव लक्ष्यीकृत्य नूतनं विधानमवतारयति। क्वचित् सिद्धान्तकौमुद्याः सन्दर्भेषु ऐक्यं दृश्यते, परं कः कमनुसरति? इति सिद्धान्तितं सन्दर्भितञ्च नास्ति प्रकृते ग्रन्थे। परं नावीन्येनायं विषयः अनुसरणीयः व्याख्येयश्च। अत एव ग्रन्थस्यास्य धात्वर्थप्रकरणस्य वर्णनवैचित्र्यमेवाधिकृत्य प्रकृतशोधपत्रम् आचार्यदृशा विदुषां परिषदि विनिवेदयिष्यामि।

## 33. महाभाष्यकारस्य लौकिकोदाहरणप्रस्तुतिकला

**प्रतिभा आर्या**
शोधच्छात्रा, संस्कृतविभागः, कलासंकायः, काशीहिन्दूविश्वविद्यालयः, वाराणसी

अस्ति हि सुविदितं महत्त्वं पातञ्जलमहाभाष्यस्य निखिलेऽपि व्याकरणात्मके निकाये। महर्षिः पतञ्जलिः पूर्ववर्तिनः सर्वानपि व्याकरणप्रक्रियाग्रन्थान् निर्मथ्य नवनीतनीकाशमिव महाभाष्याऽऽभिधानं व्याकरणग्रन्थं व्यरचि।

महाभाष्यस्य व्याख्यानकला विराजते सुमञ्जुला। विषयनिरूपणकला गद्यशैल्याऽवलम्बिता सरलतरा सम्भाषणात्मिका च विद्योतते। तत्र दुरूहविषयाणामुपक्रमः **"इदमिह सम्प्रधार्यम्"** इत्येतादृशैर्वचनैः सार्धमध्येतृजागरणाय विधीयते। मध्ये मध्ये 'किं वक्तव्यमेतत्', 'कथमनुच्यमानं गंस्यते इति, आहोस्वित् अस्ति प्रयोजनमेतत् ? कथं तर्हि' इत्येतादृशैः सम्भाषणात्मकैर्वचोभिरध्येतृणां चेतो लक्ष्यं प्रति समाकृष्यते। पूर्वपक्षस्थापनानन्तरं **"विषम उपन्यासः"** इत्यादिभिर्भाषितैरुत्तरपक्षः प्रतिपाद्यते। पर्यन्ते खलु **"यथा न दोषस्तथास्तु"** इति निर्णयः क्रियते। **"गोनर्दीयस्त्वाह"** इत्युक्त्वा क्वचिद् ग्राह्यतरः पक्षः पुष्यते। यत्र लोकप्रयोगाणामाधारेण समाधानमनर्हं विज्ञातं तत्र **देवाः ज्ञातुमर्हन्ति, "देव एव जानाति"** इत्येतादृशैर्विनोदात्मकैर्वचनैर्निर्वाहः कृतः। एवञ्च अनेकासु कलासु निपुणः ग्रन्थकारः लौकिकोदाहरणप्रस्तुतिकलाविषयेऽपि स्वप्रतिभापाटवं प्रदर्शयति।

लौकिकोदाहरणानि विभिन्नासु परिस्थितिषु विभिन्नेषु प्रसंगेषु कुत्रचित् संशयनिवारणार्थं कुत्रचिच्च विषयस्पष्टीकरणार्थं च प्रदीयन्ते। यथा– **"इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च"** सूत्रेऽस्मिन् ह्रस्वानां ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न भविष्यति इति प्रसंगे न ह्रस्वानां ह्रस्वाः प्राप्नुवन्ति इत्यत्र उदाहरणद्वारा समाधानमाह– **न हि भुक्तवान् पुनर्भुङ्क्ते, न वा कृतश्मश्रुः पुनः श्मश्रूणि कारयति।** ननु च पुनः प्रवृत्तिरपि दृष्टा। भुक्तवानपि पुनर्भुङ्क्ते, कृतश्मश्रूणि पुनः श्मश्रूणि कारयति, अत्र प्रबलतरं लौकिकोदाहरणप्रदत्तम्। **सामर्थ्यात्तत्र पुनः प्रवृत्तिर्भवति– भोजनविशेषात् शिल्पिविशेषाद्वा।** पुनः ह्रस्वानां पुनर्ह्रस्ववचने न किंचित् प्रयोजनमस्ति इति संशये सति लौकिकोदाहरणं प्रस्तूयते– **अकृतकारि खल्वपि शास्त्रमग्निवत् तद्यथा– अग्निर्यददग्धं तद्दहति।** ह्रस्वानामपि ह्रस्ववचन एतत् प्रयोजनम् स्वरसन्धिर्मा भूदिति आक्षेपे सति तथैव अपरमुदाहरणं प्रोच्यते– **कृतकारि खल्वपि शास्त्रं पर्जन्यवत्। तद्यथा– पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति।**

एवञ्च लौकिकोदाहरणरीत्या शास्त्रीयसमाधानं क्रियते। कुत्रचित् दुरूहस्थलानां स्पष्टीकरणार्थं कुत्रचिच्च परिभाषाणां बोधनार्थं– तद्यथा – **असिद्धं बहिरङ्गमन्तरङ्गे** एषा परिभाषा लोकतः सिद्धाः। प्रत्यङ्गवर्ती लोको सन्दृश्यते। तद्यथा पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत् करोति, ततः सुहृदान्ततः सम्बन्धिनाम्।

एवञ्च यादृशं सुप्रयुक्तं लौकिकोदाहरणं यस्मिन् प्रसङ्गे प्रदत्तं तेन अस्य विचक्षणस्य ग्रन्थकारस्य कलाविषये असाधारणप्रतिभावैभवं स्फुटं भवति। इत्थं व्याकरणसदृशो जटिलो विरसश्च विषयो हृद्यतरेण सरसीकृतो भगवता पतञ्जलिना। महाभाष्यकारस्य अप्रतिमामिमां कलामभिलक्ष्य भर्तृहरिणा वाक्यपदीये समाख्यातं–

अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्।

## 34. अलंकारसर्वस्वे परिणामालङ्कारप्रस्तुतिकला

**प्रीतमरुजः**

गवेषकः, संस्कृत–पालि–प्राकृत–विभागः, विश्वभारती, शान्तिनिकेतनम्
pritamrooj1989@gmail.com

सूत्र–वृत्तात्मकस्य अलंकारसर्वस्वस्य रचयिता राजानक रुय्यकः खीष्टाब्दीयद्वादशशतकस्य पूर्वार्धे काश्मीरदेशेऽविद्यत। तस्यापरनाम राजानकरुचकः इत्यपि आसीत्। तस्य पित्रा राजानकतिलकेन 'उद्भटविवेकः' इतिग्रन्थः विरचितः। श्रीकण्ठचरितकारः मङ्खकः काव्यस्यान्तिमे सर्गे रुय्यकमेवं स्वगुरुरूपेण वर्णयति। रुय्यकप्रतिपादितेषु ग्रन्थेषु पञ्चग्रन्थाः प्रकाशिताः। तन्मध्ये **'अलंकारसर्वस्वम्'** इति अलंकारग्रन्थः अन्यतमः। ग्रन्थेऽस्मिन् षट्सप्तत्यर्थालंकाराः षट् शब्दालंकाराश्च रुय्यकेन प्रतिपादिताः। रुय्यकप्रतिपादितेषु नवीनार्थालंकारेषु परिणामालंकारः अन्यतम इति। परिणामालंकारस्य लक्षणे रुय्यकेनोक्तम्– **'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः'**

अर्थात् यत्र उपमेये उपमानस्य उपयोगो भवति तत्र परिणामालंकारः स्यात्। आरोप्यमाणं रूपके प्रकृतोपयोगित्वाभावात् प्रकृतोपरञ्जकत्वेनैव केवलम् अन्वयं भजते। परन्तु परिणामे प्रकृतात्मतया आरोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणरूपत्वेन परिणमति। एवम्प्रकारेण रुय्यकस्य परिणामालंकारस्य एकं सार्विकं समीक्षणं मम सन्दर्भस्यास्य विषयः।

## 35. आचार्यविश्वेश्वरकृतायां रसचन्द्रिकायां नायकसहायप्रस्तुतिसौन्दर्यम्

**मिलनरक्षितः,**
गवेषकः छात्रः, संस्कृत–पालि–प्राकृतविभागः, विश्वभारती, शान्तिनिकेतनम्।
milanrakshit88@gmail.com

पण्डितराजजगन्नाथस्यानन्तरं काव्यशास्त्रविषयकरचनाक्षेत्रे विश्वेश्वरपाण्डेयस्यावदानमेकं विशिष्टं वर्तते। विश्वेश्वरपाण्डेयस्य समयकालः ईशवीय अष्टादशशतकः। तस्य पितुर्नाम लक्ष्मीधरः आसीत्। उत्तरप्रदेशस्य अल्मोड़ामण्डलान्तर्गते पाटियानामकग्रामे ब्राह्मणकुले विद्वानयं जनिं लेभे। तस्य विविधशास्त्रनिष्णातेषु एकाधिकेषु ग्रन्थेषु रसचन्द्रिका एका विशेषा। इयं च नायकनायिकादीनां परिष्कृतलक्षणनवीनप्रायोदाहरणरसादिनिरूपनादिभिः स्वसदृशानपरान् प्रबन्धानतिशेते इत्यत्र न बहुवचनप्रपञ्चनस्य प्रयोजनम्। ग्रन्थादौ सप्रसङ्गभेदादिपुरसरं नायिकानिरूपनं कृतम्। तदनन्तरं तेन सप्रसङ्गभेदादिपुरस्सरं नायकं वर्णितम्। नायकवर्णनाविषये नायकस्य सहायाः, तेषां भेदः, व्यापाराश्च तेन आलोचितम्। नायकस्य सहायाश्चतुर्धा, पीठमर्द–विट–चेट–विदूषकभेदात्। तेषामपि लक्षणोदाहरणं प्रस्तुतम्। तत्र विद्यानाथस्य सम्मतिं प्रस्तौति। नायकसहायाः, तस्य भेदाः, व्यापाराणां च एकं समीक्षात्मकम् अध्ययनमत्र विधीयते ।

## 36. व्याकरणशास्त्रे भारतीयायाः कलायाः सौन्दर्यस्य वा तत्त्वानि

**डा. रामनारायणद्विवेदी**
सहायक प्रोफेसर, व्याकरणविभागः, राजकुमारीगणेशशर्मासंस्कृतविद्यापीठ, कोलहण्टा, पटोरी, दरभंगा(बिहार)

शब्दब्रह्मरूपं वाग्रूपं यत् वर्तते तच्च यथैव सर्वविधसौन्दर्यस्य आधायकं तथैव समस्तकलानां विद्यानां शिल्पस्य उपनिबन्धनमूलं वर्तते तथा च एतद्विषय एव वाक्यपदीयकारः उक्तवान्–.

**स सर्वविद्या शिल्पानां कलानां चोपबन्धनी।**
**तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते।।**

सा वाक् सर्वविद्या शिल्पानां कलानां च उपबन्धनी सर्वासां चतुर्दशानाम् अष्टादशानां वा विद्यानां चतुःषष्टिकलानां च उपबन्धनी मूलम्। तद्वशात् वाग्रूपतावशाद् अभिनिष्पन्नं सर्वं वस्तु विभज्यते विभक्तरूपेण व्यवहारविषयो भवति। "अयं घटः अयं पटः" इत्येवं भेदरूपेण व्यवह्रियते इत्यर्थः।। यद्यपि शब्दाख्यं ब्रह्म निर्गुणं असंगं च वर्तते तथापि जगदारोपानुरूपां शक्तिमाश्रित्य जगत् सर्वं करोति। अत एव भर्तृहरिणा उक्तम्–

**अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः।।**

तच्च शब्दाख्यं ब्रह्मलोके विद्यमानां सर्वविद्यां कलां करोति। इदं व्याकरणं लोकव्यवहारानुगुणं नानाविधं लोकन्यायम् उपादिशत् जगतकलां विदधाति, अतः व्याकरणाध्ययनेन सर्वविधं सौन्दर्यं कला विद्या च ज्ञातुं शक्यते इति संक्षेपः।।

## 37. मधुसूदनसंरस्वतीविरचितं कृष्णकुतूलम् : एकं नान्दनिकमध्ययनम्

**रिक्ता मण्डल**
शोधच्छात्रा, संस्कृतविभागः, विश्वभारती, शान्तिनिकेतनम्

अद्वैतवेदान्ती मधुसूदनसरस्वती अद्वैतसिद्ध्यादीनां बहुग्रन्थानां रचयिता। परं तस्य सप्ताङ्कविशिष्टं नाट्यं 'कृष्णकुतूहलम्' वैष्णवानां समाजे उच्चैः सभाजितम्। राधाकृष्णयोः चन्द्रावलीकृष्णयोः, गोपिकासु च कृष्णस्यापार्थिवलीला नाटकेऽस्मिन् शृङ्गार-विप्रलम्भाद्भुतादीनां रसानां कलात्मकं परिपोषणं विदधाति। अस्य नाटकस्य नन्दनतात्त्विकाध्ययनं शोधपत्रेऽस्मिन् अभिप्रेतमस्ति। रचयितुर्नाट्यकलायाः शृङ्गारतात्त्विकाध्ययनमवश्यं भारतीयसौन्दर्यतत्त्वं पोषयिष्यति।

## 38. वेदेषु वाचः पर्यायवाचिशब्दानामर्थसौन्दर्यम्

**संगीता आर्या**
शोधच्छात्रा संस्कृतविभागः, काशीहिन्दूविश्वविद्यालयः, वाराणसी

सर्गादौ परमात्मना यथा सृष्टेः सौन्दर्यानुभूत्यर्थं विविधगिरिद्रुमसमुद्रादीनां रचना व्यधायि, जीवानां रसास्वादसौन्दर्यानुभूत्यर्थं विविधप्रकारकान् फलवनस्पतीनाञ्चोपहारमाददौ, नासिकायाः घ्राणसौन्दर्यानुभूत्यर्थं विविधान् गन्धान् रचयामास श्रवणार्थं च यथा विविधध्वनितरङ्गान् ततान, तथैव ब्रह्मणा सर्गादावेव बुद्धेः सौन्दर्यानुभूत्यर्थं, मतौ विवेचनक्षमताव्युत्पादनार्थम्, धिया मनुष्यैः किं ध्येयमिति मनसि निधाय वेदविज्ञानमस्माभिराददे। अत्र प्रमाणम् –

**बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः।**
**यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः।** (ऋग्वेदे 10/71/1

एतेषां वेदानां भाषासौन्दर्यं दृष्ट्वा निश्चप्रचं दिव्यशक्तेरनुभूतिः बोभवीति। यत्रैकैव शब्दः क्वचिद् पञ्चाशदधिकानर्थान् विभृते तु क्वचिद् पञ्चाशच्छब्दा एकमेवार्थमादधते। एकैकः शब्द आध्यात्मिकादि प्रसंगेषु भिन्न-भिन्नार्थान् वरीवर्ति। येषां सुष्ठु ज्ञानेन मोमुद्यन्ते विदुषां मतयः। किमिदं वैदिकशब्दानामर्थसौन्दर्यं न खलु? वर्तत एव। परमात्मना प्रदत्तत्वादेतेषां वेदानां नित्यत्वं लोकेऽस्मिननादिकालाच्चकास्ते। तद्यथा ऋग्वेदे हि –

**तस्मै नूनमिधत्ते वाचा विरूप नित्यया।** (ऋग्वेदे 8/65/6)

वेदानां नित्यत्वाद् वैदिकशब्दाः, तेषां शब्दानामर्था अन्यच्च तयोः शब्दार्थयोः पारस्परिकसम्बन्धोऽपि नित्यैव भवति। महर्षिपतञ्जलिरपि सिद्धान्तमिमं स्वीकुर्वन् व्याजहार –

**सिद्धे शब्दार्थसम्बन्धे।** (महाभाष्यपस्पशाह्निके)

वाक्यपदीयस्य ब्रह्मकाण्डेऽपि –

**नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः।**
**सूत्राणामनुतन्त्राणां भाष्यांणाञ्च प्रणेतृभिः।।** (वाक्यपदीयब्रह्मकाण्डे 33)

एवं शब्दार्थयोः नित्यसम्बन्धे सत्यमुष्मिन् शोधपत्रे केवलमेकस्य 'वाक्' शब्दस्य सप्तपञ्चाशत् पर्यायवाचिशब्दानां भिन्न-भिन्नमन्त्रेषु भिन्न-भिन्नव्युत्पत्तिव्याकरणादि विभागेनैतेषां प्रयोगसौन्दर्यं प्रस्तोष्यते। तद्यथा प्रथमः वाचः पर्यायवाचिशब्दो वर्तते– श्लोक इति। **'श्रु श्रवणे'** इत्यस्माद्धातोः **'इणभीकापाशल्यतिमर्चिभ्यः कन्** (उणादिकोशे 3/43) अनेनौणादिकेन सूत्रेण बाहुलकाद् 'कन्' प्रत्ययो, गुणः, पुनः **'कृपो रो लः'** इत्यत्रपठितेन **'कपिलकादीनां संज्ञाछन्दसोर्वा रो लमापद्यत इति वक्तव्यम्'** (उणादिकोशे 3/43) वार्तिकेन रेंफस्य लत्वम्। अर्थात् **श्रूयते इति श्लोकः**। वाक् च श्रूयते। महर्षिणा यास्केनापि निरुक्ते **'श्लोकः श्रृणोतेः'** (उणादिकोशे 3/43) इत्युक्तम्। अथवा **'श्लोकृ संघाते'** इत्यस्माद् धातोः 'पुसिः संज्ञायां घः प्रायेण' इत्यस्माद् घः प्रत्ययः। **'श्लोक्यते पद्यरूपेण संहन्यते कविभिः इति श्लोकः।**

ऋग्वेदस्य मन्त्रेऽस्मिन् प्रयुक्तः श्लोकशब्दः वाक् पदवाच्यः। दर्शनीयोऽत्रमन्त्रोऽयम् –

**यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः।** (ऋग्वेदे 10/ 94 /1)

आदरणीयाः तेजस्विनः प्रजाजनाः! यूयं स्व राज्ञे प्रशस्तां वाचं धारयथ, येन यूयं समृद्धाः भविष्यथ अथवा सुसमृद्धस्य राज्ञः राज्ये निवत्स्यथ। एवमेव

**ऋतस्य श्लोको बधिरा ततर्द।** (ऋग्वेदे 10/ 94 /1)
**श्लोको न यातमपि वाजो अस्ति।** (ऋग्वेदे 10/12/5)

इत्यादिषु मन्त्रेष्वपि 'श्लोक' इत्येष शब्दः वाचः पर्यायवाचिरूपेण प्रयुक्तः। प्रसंगेऽस्मिन् अन्यान्यप्युदाहरणानि द्रष्टुं शक्यन्ते –

**इडा – 'इल क्षेपणे' क्षिप्यते प्रेर्यते उच्चारणकाले प्राणेनेति इडा वाक्।**
**गौः – 'गम्लृ गतौ' गच्छति यज्ञेष्वाहूता गीयते, स्तूयते वेति गौः वाक्।**

मन्द्रा– 'मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु' गच्छति स्वामिधेयं प्राप्नोति, अधिगम्यते वा तदर्थिभिः मन्द्रा वाक्। इत्यादीनां सप्तपञ्चाशत् शब्दानां वेदमन्त्रेषु वाचः पर्यायवाचिरूपेणार्थसौन्दर्यममुष्मिन् शोधपत्रे प्रस्तोष्यते मया।

## 39. महाभारते नारी–सौन्दर्यतत्त्वम् : एकमध्ययनम्

संगीता मण्डल
शोधच्छात्रा, संस्कृतविभागः, विश्वभारती, शान्तिनिकेतनम्

शोधपत्रेऽस्मिन् व्यासमुनेः काव्यव्यापारे नारीसौन्दर्यस्य प्रस्फुटनं विविधप्रकरणानुरोधेन कीदृशं भवति तस्य संक्षिप्ताध्ययनं प्रकल्पितमस्ति। रामायणेषु करुण–वीरादीनां रसानां प्राबल्यात् नारी नन्दनतत्त्वानुसारं नाधिकमुपस्थापिता, परन्तु महाभारते शान्तवीरादिरसानां निष्पत्तिर्यद्यपि सहृदयैरनुभूयते, तथापि तत्र विविधनारीचरित्राणां पल्लवनात् व्यासस्य नारीसौन्दर्यदृष्टिः समुज्ज्वला एव। आदिपर्वणि शकुन्तला, वनपर्वणि द्रौपदी, राजकन्या लोपमुद्रा, ऋष्यशृङ्गऋषेः प्रलोभका गणिकाः अन्यत्र अन्या अपि नार्यः आविर्भूय व्यासस्य कलात्मकं नारीसौन्दर्यवर्णनं प्रेरयन्ति। तासां रूपवेषवर्णनातः वयं व्यासस्य सौन्दर्यदृष्टिमाविष्कर्तुं यतामः।

## 40. अलङ्कारशास्त्रे सौन्दर्यबोधो योषिदलङ्काराश्च

संस्कृता मिश्रा
शोधच्छात्रा, संस्कृत एवं प्राकृतभाषाविभागः, लक्ष्मणपुरविश्वविद्यालयः, लक्ष्मणपुरम् –226021
दूरभाषः 8765167722

नैकदृष्टिभिरिदं शक्यते कथयितुं यत्सौन्दर्यशास्त्रं काव्यशास्त्रस्यैव विकसितं चैतन्यसमन्वयवच्च रूपम्। यथा हि पश्चिमदेशीये काव्यशास्त्रे ब्यूटी सब्लाइम इत्यादीनामध्ययनविषयत्वमस्ति तथैवास्ति भारतीयकाव्यशास्त्रे चारुताविच्छित्तिचमत्कारवक्रतादीनामतितरां गहनमन्वीक्षणं तेषां सौन्दर्यबोधहेतुत्वात्।

सौन्दर्योद्भवविषये नैकेषामस्ति मतं यदस्योत्पत्तिरपेक्षते स्थितिद्वयं नान्यथा शक्यस्तदाविर्भावः, सौन्दर्यसृष्टौ सुन्दरालोकने च। अत्रास्त्यविनाभावः सम्बन्धः सौन्दर्यानुभूतेरानन्दस्य च। तस्मादेवानन्दकुमारस्वामिनाऽनुभूतिरेषा प्रज्ञानघनानन्दमय्युक्ता। रसास्वादार्थस्तु सौन्दर्यबोधः यदिच्छत्यालोकनाधारं ततोऽस्त्यलङ्कारमाहात्म्यम्। अत्रालङ्कारपदेनास्ति मया योषिदलङ्कारग्रहणम्।

प्राप्तायां तारुण्यावस्थायाम् भवन्त्येते खल्वलङ्काराः। अलङ्कुर्वन्तीत्यलङ्काराः। अलङ्कारास्तु शोभाविधायिनो धर्माः नायिकां शोभयन्तीति। काव्य एते आदधति तस्यां सौन्दर्यमथ च काव्यास्वादके रसास्वादमपि। नाट्येप्येते साध्वभिनयपुरःसरं सामाजिकमनुभावयन्ति रसम्। एतेषामुत्पत्तिर्भवति सत्वकारणादिति बहूनां मतं यथा हि धनिकेनोक्तं सत्वादुद्भवनम्। यथोक्तमेव मुनिना भरतेन यदलङ्काराः खल्वेते भवन्ति वनिताशरीरसम्बद्धाः तस्मादेव हेतोरुच्यन्ते सात्विका इति। योषिदलङ्कारप्रकाराः त्रय इति प्रायः सर्वसम्मतम्। यथा गणपति भरतोऽपि आदौत्रयोऽङ्गजा इति। तथैव धनंजयोपि तदनुवर्तितवेन भेदत्रमेव स्थापयामास। विश्वनाथोऽपि स्वीचकार तत्त्रिकमलङ्कारा इति। शरीरजानां पश्चादस्ति स्वभावजानामलङ्काराणां गणना। स्वभावजाननु विवेचिताः भवन्त्यलङ्करा अयत्नजाः।

अन्यस्मिन् रससम्प्रदायगते ग्रन्थे रसकलिकायां किंचिद्वैशिष्ट्यमस्ति । प्रायः सर्वेऽपि काव्यशास्त्रकवयः खल्वेतानलङ्कारानपश्यन्वनितामात्रप्रसक्तानेव तत्रैव रुद्रभट्टः दधात्यन्यमेव नवलं चिन्तनम्। तेन नैव व्यधायि योषिदलङ्काराणां पृथग्गणना विभावगुणेष्वेव तेषामन्तःस्थापनात्। भावहावादयो येऽलङ्काराः तारुद्रभट्टः उभयत्रापि मन्यते सत्वस्थान् तस्मान्न वनितामात्रेषु तेषां परिगणनमकारि तेन। एते गुणाः भवन्त्यालम्बनस्य न तु वनितामात्रालम्बनस्य। असौ रसपोषकृत उद्दीपनस्य चर्चां कृत्वा पुनस्तेषां भेदान् स्थापयामास। अत्राहं सौन्दर्यबोधतात्पर्यमनुयान्ती वनितालङ्काराणां तदाधारतत्त्वतया स्थितिमिमान्कानपि प्रमुखरससम्प्रदाय–ग्रन्थाननुशीलयन्ती विश्लेषयिष्यामि।

## 41. श्रीकृष्णसार्वभौमविरचितस्य पदाङ्कदूतस्य रूपकालङ्कारसौन्दर्यम्

सत्यजित् पाँजा
शोधच्छात्रः, संस्कृत–पालि–प्राकृतविभागः विश्वभारती, शान्तिनिकेतनम्
satpanja@gmail.com

श्रीकृष्णसार्वभौमः बङ्गदेशस्य एक प्रथितयशः नैयायिकः आसीत्। काव्यशास्त्रेष्वऽपि तस्य गभीरनैपुण्यं परिदृश्यते। खीष्टीयाष्टादशशतके वैष्णवतत्त्वम् अवलम्ब्य स एकाधिकं काव्यं रचितवान्। स कृष्णनगरस्य रघुरामरायनृपतेः आज्ञां शिरोधाय पञ्चचत्वारिंशदुत्तरषोडशशतामिते शाके प्रीतिप्रदं पदाङ्कदूतमितिकाव्यं विरचितवान्। अस्मिन् काव्ये दार्शनिकतत्त्वं परिदृश्यते नूनम्। किन्तु अत्र नन्दनतत्त्वं तथा सौन्दर्यतत्त्वमपि सम्यकरूपेण उपलभ्यते। श्रीकृष्णस्य विरहविधुरा तथा विच्छेददुःखिता नीलकमलसदृशनयना काचित् गोपी(श्रीराधा) तम् (श्रीकृष्णम्) अप्राप्य मूर्छिता संजाता। कियत्क्षणम् अनन्तरं यमुनाकुञ्जस्य प्रान्तसमीपदेशे कुलिषकमलरथावयवचक्रयुक्तं श्रीकृष्णचरणस्य चारुचिह्नं दृष्ट्वा तच्चिह्नं प्रति दौत्यं कर्तुं प्रार्थितवती। अतः सागोपीगोपीनां स्वीयाभीष्टसम्पादनार्थं तया (गोप्या) पदाङ्कं यथायथं वर्णयन् पथिपाथेयविषयेषु कर्त्तव्याकर्त्तव्यविषयेषु च उपदिदेश। अस्मिन् काव्ये श्रीकृष्णसमीपे गोपीजनानां वार्ता प्रेरयितुं पदाङ्कं नियोजितम्। अत्र षट्चत्वारिंषद् श्लोकाः सन्ति एते सर्वे श्लोकाः मन्दाक्रान्तावृत्तेन विरचिताः। नाट्यशास्त्रकाराचार्यभरतानुसारेण रूपकमलङ्कारस्य लक्षणं यथा–

स्वविकल्पेन रचितं तुल्यावयवलक्षणम् ।
किञ्चित् सादृश्यसम्पन्नं यद्रूपं रूपकं तु तत्।। (नाट्यशास्त्रम् 17/58)

एतत् प्रसङ्गे आचार्यमम्मटेनापि उक्तं यत् "तद्रूपकमभेदो य उपमानोपमेययोः"। (काव्यप्रकाशः 10/93) रूपकस्य लक्षणं प्रसङ्गे विश्वनाथेनापि उक्तं यत् "रूपकं रूपितारोपाद् विषयेनिरपह्नवे"। (साहित्यदर्पणः 10/28)। अर्थात् निषेधरहिते उपमेये रूपितस्य (उपमानस्य) आरोपात् (तादात्म्याऽध्यासात्) रूपकालङ्कारः। पदाङ्कदूते अस्योदाहरणं यथा –

सन्त्येवास्मत्कलुषकारिणः कोटिशो वारणीया–
स्तेऽप्यस्माभिः स्मृतिकरवरेणाङ्कुशं तेगृहीत्वा।
स्वच्छन्देनव्रज मधुपुरीं को भवेत् वा विरोधी
गोपीभर्तुर्विरहजलधिंगोपकन्यास्तरन्तु।।(पदाङ्कदूतम्–10)

अर्थात् अस्माकं (गोपीनाम्) कलुषाणिकोटिशः सन्ति। अस्माभिः उत्कृष्टस्मरणरूपहस्तेन त्वयि चिह्नाकारेण स्थितं अङ्कुशं तथा गजनियामकम् अस्त्रविशेषं गृहीत्वा ते निवर्तनीयाः। कोऽपि मार्गावरोधको न भवेत्। स्वच्छन्देन मधुपुरीं गच्छन्त्यः गोपकन्याः श्रीकृष्णस्य विरहसागरं अतिक्रामन्तु। श्लोकेऽस्मिन् कलुषे हस्तारोपात् स्मृतेः उत्कृष्टहस्तारोपाच्च अत्र रूपकालङ्कार इति।

## 42. साहित्यकौमुद्यां चित्रालङ्कारसौन्दर्यम्

धीरजकुमारमिश्रः
शोधच्छात्रः,संस्कृतविभागः, कलासंकायः, काशीहिन्दूविश्वविद्यालयः
dhirudhccrej.mishra@gmail.com

संस्कृतसाहित्यस्य परम्परायां बलदेवविद्याभूषणनामा आचार्योऽभूत् यः साहित्यस्योभयपक्षे सिद्ध आसीत् – काव्ये काव्यशास्त्रेऽपि। आचार्यवर्येण एकादशपरिच्छेदेषु विभक्तः "साहित्यकौमुदी" इति काव्यशास्त्रग्रन्थः विरचितोऽस्ति। काव्यशास्त्रेऽस्मिन् पूर्वाचार्यैः समादृताः काव्यशास्त्रविषयकाः मम्मटाचार्यस्य सम्पूर्णसिद्धान्ताः कारिकासु वर्णिताः वर्तन्ते। कारिकाणां रचनाकारो मम्मटाचार्यः इति प्रायशः विद्वांसः इतिहासवेत्तारोऽपि मन्यन्ते। अस्य नवमपरिच्छेदे शब्दालंकारस्य निरूपणे चित्रालङ्कारस्य सौन्दर्यमत्यन्तमाह्लादकारकं लालित्यपूर्णं च वर्तते। चित्रालंकारलक्षणमस्ति – तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता। यत्र सन्निवेशविशेषेण स्थिता वर्णाः खड्गचक्राद्याकारान् प्रकाशयन्ति तच्चित्रं नाम। तत्र खड्गबन्धो यथा–

वीणावाणी सुन्दरीवृन्दमुख्या ख्यातासद्भिर्लक्षणै कुंजदेवी।
वीक्षांचक्रे माधवं भावसारा रासोल्लासात्कापि सं फुल्लनीवी।।

यथा पद्मबन्धेऽपि पद्यमिदं पद्माकारे सौन्दर्यं प्रकटयति–

कलवाक्य सदालोक कलोददार मिलावक।
कवलाद्याद्भुतानुक कनुवामीत बालक।।

इत्थं काव्यशास्त्रस्य अभिनवग्रन्थेऽस्मिन् चित्रालङ्कारसौन्दर्यं चारुतया उपवर्ण्यते । प्रस्तुतेऽस्मिन् शोधपत्रे बलदेवभूषणाचार्यस्य चित्रालङ्कारविषयकदृष्टेः उपस्थापनं विधास्यते।

## 43. संस्कृतकाव्यसाहित्ये सौन्दर्यस्य विवेचनम्

डॉ0 शशिभूषणतिवारी
प्रवक्ता (संस्कृत)गाँधी स्मारक इण्टर कॉलेज पचपोखरी, नोखा, जिला रोहतास (सासाराम) बिहार 802217,
shashi.bhushan.tiwarissm@gmail.com 9934899605

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।। रघुवंशम् 1.1।।

संस्कृतं विश्वस्य प्राचीनतमानां भाषाणां जननी अस्ति। विश्वस्य प्राचीनतमं पुस्तकं 'ऋग्वेदः' अस्याम् भाषायाम् उपनिबद्धः। धार्मिक–साहित्यिक–दार्शनिक–मानविकी–वैज्ञानिकादिषु विविधकषु क्षेत्रेषु संस्कृतसाहित्यं ज्ञानस्य महासागरः विद्यते। संविधानस्य अष्ट अनुसूच्यां द्वाविंशातिः भाषा सूचीबद्ध वर्त्तते। यस्यां संस्कृतस्य स्थानं महत्वपूर्णं विद्यते। संस्कृतसाहित्ये अनेकानि प्रमुखाणि तत्त्वानि सन्ति। साहित्यशब्दस्य व्युत्पतौ 'हितेन सहितं साहितम्, साहितस्य भावः साहित्यम् हितशब्देन शिवस्यापि संकलनं साहित्येऽभिधीयते। काव्यस्य रसानुभूतेर्ब्रहानन्दसहोदरत्वेन माधुर्यसमन्वितत्वम् आनन्दात्मकत्वं च स्वीक्रियते। 'सत्यं बूयात् प्रियं ब्रूयात् मा ब्रूयात् सत्यमप्रियम्' इत्यत्र सत्यस्य शिवस्य च समाहारोऽपेक्ष्यते। काव्ये 'सुन्दरम्' इत्यनेन रम्यत्वं मनोज्ञत्वं हृद्यत्वं चाभीष्यते। किं नाम सुन्दरं सौन्दर्यं वा ? बाह्यं सौन्दर्यं लोचनयुगलेन आभ्यन्तरं च सौन्दर्यं हृदयेन गृह्यते। किं नाम मधुरत्वं रम्यत्वं वा? इति जिज्ञासासां माघेन निरूप्यते– क्षणे क्षणे यन्नवतापुपैति, तदेव रूपं रमणीयतायाः (शिशुपालवधम्–4/17) मम्मटाचार्येण काव्यप्रकाशे काव्यप्रयोजनत्वेनाभिधीयते–

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।। (काव्यप्रकाशः 1/2)

इत्यत्र 'शिवेतरक्षतये' इत्यनेन शिवस्य, 'सद्यः परनिर्वृतये' 'कान्तासम्मिततयोपदेशयुजे' इति पदद्वयेन माधुर्यस्य सौन्दर्यस्य च समन्वयो लक्ष्यते।

उक्तं च 'क्रियासु युक्तैर्नृप ! चारचक्षुषो न वंचनीयाः प्रभवोऽनुजीविभिः'
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः। ( किरातार्जुनीयम्–1/4)

इत्यत्र भारविकविना शिवस्य सुन्दरस्य च सामञ्जस्यं सामर्थ्यते।

साहित्य–संगीत–कलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः' इत्यत्रापि साहित्येन सत्यस्य, संगीतेन माधुर्यस्य शिवस्य च कलाशब्देन सौन्दर्यस्य च समन्वयोऽभीष्यते।

शिशुपालवधे वर्णितम्– नवपलाशपलाशवनं पुरः, स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत् सं सुरभिं सुरभिं सुमनोभरैः।। (शिशु0–6/2)

नैषधीयचरिते राजानं नलं प्रति हंसः किमपि वक्तुम् उपक्रमते। कस्यापि पक्षिणः स्वर्णपक्षप्रादुर्भुतम् सौन्दर्यं मया न कुत्रापि दृष्टम्। इत्येवं प्रकारेण प्रशंसन्तं नलं प्रति हंसः उक्तवान् –

न जातरूपच्छदजातरूपता, द्विजस्य दृष्टेयमिति स्तुवन्मुहुः।
अवादि तेनाथ स मानसौकसा जनाधिनाथः करपंजरस्पृशा। (नैषधीयचरितम्–1/11)

विश्वस्य सौन्दर्यस्य वर्णनं रामचरितमानसे विद्यते–

सुन्दरता कहुँ सुंदर करई। छवि गृह दीप सिखा जनुवरई।
सब उपमा कवि रहे जुठारी। केहिं पततरौ विदेहकुमारी।।

संस्कृतकाव्यसाहित्ये सौन्दर्यस्य महत्ता दृश्यते। यत्र रसः, अलंकारः, छन्दः इत्येतैः समन्वितं काव्यं सौन्दर्यं प्राचुर्येण प्रकाशयति। भारतीयायां चित्रकलायामपि सौन्दर्यं प्राप्यते। कलायाः सिद्धौ सौन्दर्यस्य समधिकं निवेशो हेतुर्भवति।

## 44. छत्रपतिसाम्राज्यनाटकस्य रसानुभूतिसौन्दर्यम्

श्रीचेता मैत्र
अनुसन्धात्री, संस्कृत–पालि–प्राकृतविभागः, विश्वभारती, शान्तिनिकेतनम्।
sricheta4988@gmail.com .07384348398

१८८६तमे वर्षे गुर्जरप्रदेशे लब्धजन्मना, स्वपाण्डित्यमहिम्ना वडौदामहाराजप्रभृतिभिः सम्मानितेन, महर्षेररविन्दस्य समकालिकेन संस्कृतविदुषा आचार्यमूलशङ्करमानेकलालयाज्ञिकेन प्रणीतानि त्रीणि नाटकानि सन्ति, यथा– संयोगितास्वयंवरम्, छत्रपतिसाम्राज्यम्, प्रतापविजयम् चेति। नाट्यत्रयम् ऐतिहासिकं प्रेक्षापटमवलम्ब्य रचितमस्ति। तन्मध्ये छत्रपतिसाम्राज्यनाटके महाराष्ट्रकेशरिणः छत्रपतेः १६४६वर्षतः १६७४वर्षकालपर्यन्तं कार्यकलापस्य सजीवं चित्रनं परिलक्ष्यते। अस्य नाटकस्य दशसु अङ्केषु स्वातन्त्र्यप्रियेण छत्रपतिशिवाजीमहाराजेन धर्मराज्यस्थापनाय कृतान् संघर्षान् वर्णयति। अत्र शिवाजीमहाराजस्य शौर्यमयानि कार्याणि, तत्कालीनस्य यवनसम्राजः दुर्नीतेश्च मार्मिकं चित्रणं वर्तते।

प्रकरणेभेदे रसशब्दस्य विभिन्नार्थः परिलक्ष्यते। यथा भोजनप्रकरणे रसशब्देन मधुराम्लादीनां ग्रहणं भवति। किन्तु साहित्ये रसशब्देन शृङ्गारादीनां नवरसानां ग्रहणं भवति। अयं रसशब्दः काव्ये विशिष्टार्थेषु प्रयुज्यते। तस्य प्रयोजनमपि विशिष्टं वर्तते– इति नाट्यशास्त्रे भरतमुनिनोक्तम्–"न हि रसादृते कश्चिदर्थः प्रवर्तते"। भरतमुनेरनन्तरं

सर्वे आलंकारिकाः भरतमुनेः रसलक्षणं मनसि निधाय रसलक्षणं कृतवन्तः। यथा रसलक्षणप्रसङ्गे विश्वनाथकविराजेनोक्तम्–

**विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।**
**रसतामेति रत्यादिः स्थायी भावः सचेतसाम्।।"**

अर्थात् रत्यादयः ये स्थायिभावाः सन्ति ते यदा विभवानुभावादिभिः परिपुष्टिं गच्छन्ति तदा स्थायीभावाः रसतां प्राप्नुवन्ति इति विश्वनाथस्याभिप्रायः।

छत्रपतिसाम्राज्यं नाम नाटकं यदि सम्यक् रूपेण पर्यालोचनं कीयते तर्हि तत्र विविधानां रसानां स्फुर्तिः परिलक्ष्यते। विविधेषु रसेषु तत्र केन प्रकारेण अङ्गीरसरूपेण वीररसस्य स्फुर्तिः, तदत्र मम प्रवन्धस्य आलोच्यविषयः।

## 45. त्रिविक्रमभट्टविरचितस्य नलचम्पूकाव्यस्य प्रथमोच्छ्वासे श्लेषालङ्कारप्रस्तुतिकला

**शुभेन्दुमण्डलः**
गवेषकः संस्कृत–पालि–प्राकृत–विभागः विश्वभारती, शान्तिनिकेतनम्, पश्चिमवङ्गः
suvendu8488@gmail.com 08926001366

चम्पूकाव्यरचनायां दशमशतकस्य त्रिविक्रमभट्टस्य विशिष्टमेकं स्थानं वर्तते। 'मदालसा', 'नलचम्पूः' चेति नामकं चम्पूद्वयं विरचितवान् सः। तयोः नलचम्पूकाव्यस्य प्रथमोच्छ्वासस्य श्लषालङ्काराणां वैचित्र्यविश्लेषणं मम सन्दर्भस्यास्य विषयः। नलदमयन्त्योः प्रणयकथामवलम्ब्य कविना काव्यमेतत् चित्रितम्। ग्रन्थेऽस्मिन् विभिन्नानाम् अलङ्काराणाम् अवस्थानत्वादपि प्रधानतया श्लेशालङ्कारस्यैव प्राचुर्यं परिदृश्यते । श्लेषालङ्कारस्य लक्षणविषये साहित्यदर्पणकारेण विश्वनाथेनोक्तम्–**श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।।"**

अतः तन्मते अनेकार्थवाचकपदेन अनेकार्थभिधानं श्लोक इति। अस्मिन् नलचम्पूकाव्ये श्लेषालङ्कारस्य प्रयोगः यथा– **भूमयो बहिरन्तश्च नानारामोपशोभिताः ।**
**कुर्वन्ति सर्वदा यत्र विचित्रवयसामुदम् ।।**(नलचम्पूः –१/३१)

अत्र 'नानारामोपशोभिताः' इति वाक्यांशे द्वे अर्थे प्रतिपादिते । प्रथमतया 'नाना + आराम + उपशोभिताः'– अर्थात् विविधोद्यानैः शोभिताः। पुनः 'नाना+रामा+उपशोभिताः' – अर्थात् विविधसुन्दररमण्याः शोभिताः । अतः 'नानारामोपशोभिताः' इत्थं श्लिष्टवाक्यांशप्रयोगेण त्रिविक्रमभट्टः बहिर्देशस्य अन्तःपुरस्य च वर्णनं युगपत् कृतवान् । अस्य नलचम्पूकाव्यस्य प्रथमोच्छवासस्थितानां कतिपयश्लेषालङ्काराणां वैचित्र्य विश्लेषणं मम सन्दर्भस्यास्य विषयः।

## 46. व्याकरणशास्त्रीय सौन्दर्यविमर्शः

**डॉ. सुधाकरमिश्रः**
सहायकाचार्यः व्याकरणविभागः श्रीसीतारामवैदिकादर्शसंस्कृतमहाविद्यालयः,7/2 ए, पी.डब्लू.डी.रोड, कोलकाता
sudhakarmishra.vyakaran@gmail.com 09903562853

**खमशोभत निर्मेघं शरद्विमलतारकम् ।**
**सत्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ।।**(श्रीमद्भागवतमहापुराणम् 10.20.43)

यथा वेदार्थं स्पष्टं जानन् सत्वगुणयुक्तं चित्तं अत्यन्तं शोभायमानं भवति तथैव शरद् ऋतुकाले रात्रौ मेघरहितः निर्मलाकाशः ताराप्रकाशैः प्रकाशितोऽभवत् । एवमेव शास्त्रनिर्दिष्टाधिकारी भूत्वा यदा कोऽपि यस्य कस्यापि शास्त्रस्याध्ययनं करोति तदा एव तस्य सौन्दर्यनाभूतिमनुभवति । तस्य सौन्दर्यस्य किं स्वरूपमिति जिज्ञासायां नानारूपात्मकं सौन्दर्यं भवति यथा कोऽपि शरीरचर्मकृतसौन्दर्यमादाय सुन्दरी सुन्दरो वा इति व्यवहारति । कोऽपि तस्य कार्यशैलीमधिकृत्य सौन्दर्यं वदति, कोऽपि अध्ययनशैलीमधिकृत्य सौन्दर्यं प्रतिपादयति, कोऽपि व्यवहारमधिकृत्य वा सौन्दर्यं प्रतिपादयति लोके । तथैव शास्त्रप्रक्रियायामपि सौन्दर्यस्य वैशिष्टं प्रतिपादितं विद्यते । प्रथमतः यस्तु क्रियावान् स एव विद्वान् । अर्थात् यः केवलमध्ययनं करोति परन्तु न प्रयुनक्ति तदा तस्य कृते सुन्दरोऽयमिति व्यवहारो न भवति । यतो हि भाष्यकारोऽप्याह शास्त्रज्ञानपूर्वकशब्दप्रयोगे धर्मः भवति । न केवलं ज्ञाने न हि मात्रप्रयोगे । यद्यपि ज्ञानाभावे प्रयोगोऽसम्भवः । इतोऽपि सौन्दर्यस्य कृते नियमज्ञानं परमावश्यकं यतो हि –

**तत्तदुत्पेक्षमाणानां पुराणैरागमैर्विना ।**
**अनुपासितवृद्धानां विद्या नातिप्रसीदति ।।**(वाक्यपदीयम् वाक्यकाण्डम् 485)

अर्थात् तस्य ज्ञाने परम्परायाः ज्ञानं , योग्यगुरोरावश्यकता, उच्चविद्यालयस्यावश्यकता , शुचिदक्षौ पितरौ, नित्यनैमित्तिक – प्रायश्चित्तोपासनानुष्ठानयुक्तः, परम्परासंवर्धनतत्परः, उच्चाकांक्षाभिलाषी, परमात्मनि निष्ठासम्पन्नः एव शास्त्रीयसौन्दर्यस्यानुभूतिं कर्तुं शक्यते, न हि सामान्यजनः। विशेषतया विषयोपस्थापनं शोधपत्रे भविष्यति ।

## 47. यज्ञफले भासस्य सौन्दर्यचेतना

स्वाती च्याटार्ज्जी
गवेषिका, विश्वभारती, शान्तिनिकेतनम्
swati.chatterjee5@gmail.com

कालिदासपूर्ववर्ती नाट्यकारः भासः त्रयोदशनाटकानां रचयिता। एतानि नाटकानि यथा– प्रतिमा, अभिषेकनाटकम्, दूतवाक्यम, दूतघटोत्कचम्, कर्णभारम्, ऊरुभङ्गम्, वालचरितम्, मध्यमव्यायोगम्, पञ्चरातत्रम्, प्रतिज्ञायौगन्धरायणम्, स्वप्नवासवदत्तम्, चारुदत्तम्, अविमारकम् च। १६११ खीष्टाब्दे टि. गणपतिशास्त्री–महोदयः दक्षिणभारतस्य मनलिक्करनाथम् नाम स्थानात् एतान् त्रयोदश नाट्यान् आविष्कृतवान्। परन्तु परवर्तीकाले राजस्थानस्य गोण्डलनिवासिना राजवैद्य–जीवराम–कालिदास–शास्त्रिणा यज्ञफलं नामकं नूतनं नाट्यमेकमाविष्कृतम्। १६४१खीष्टाब्दे गुजरात–प्रदेशात् नाट्यमिदमाविष्कृतम्। अस्य नाटकस्य रचयिता भासो न वेति विषयेऽस्मिन् सन्देहः दृश्यते। सुशीलकुमारदे–सुदर्शनकुमारवर्मा–सुधाकरमालवीय–प्रमुखाः पण्डिताः एतन्नाटकं भासस्य रचनाविषये सम्मतिं प्रददति।

दृश्यकाव्यं भवति समाजस्य दर्पणस्वरूपम्। महाकविः भासः तस्य रचनायां समाजचित्रमतिरिच्य सौन्दर्यसृष्टौ अपि यत्नशीलः आसीत्। नाट्येऽस्मिन् भासस्य सौन्दर्यचेतना परिलक्ष्यते। काहिनीविन्यासे, कथावस्तोः पुनर्निर्माणे, चरित्रचित्रणे, अलंकारविन्यासे, वर्णनावैचित्र्ये सवत्रैव तस्य सौन्दर्यचेतना अस्माकं चित्तेषु आवेगमुद्वेलयति। सप्ताङ्कविशिष्टे नाट्येऽस्मिन् भासस्य सौन्दर्यदृष्टेः पर्यालोचनं मम गवेषणापत्रस्य विषयः।

## 48. वङ्गीयनाट्यसौन्दर्यम्

डॉ.तन्मयकुमारभट्टाचार्यः
राष्ट्रियसंस्कृतमहाविद्यालयः, 1. वङ्किमचन्द्रष्ट्रिट, कलिकाता-32

संस्कृतनाट्यसाहित्यं कदाचिद् दशरूपकोपरूपकभेदैः, कदा तेषामवान्तरभेदैः परिपुष्टं सुविकसितञ्च वर्तते। तत्र वङ्गीयनाट्यकाराः नितरां नारीसंवेदनया संभाविताः सन्ति। तेषां नाटकेषु काव्येषु च तत् प्रतिफलितम्। प्रतिनाटकं किमपि नारीचरित्रं विशिष्टं स्थानमधिकरोत्येव। तां केन्द्रीकृत्य नाट्यकारः स्वनाटकस्य वस्तुसंयोजनं विदधाति। राष्ट्रभावापन्नः नाट्यकारः मातृभूमेः भव्यं चित्रमपि समुपस्थापयति। कविः लोकोपकारभावनापोषणाय प्रार्थयति–

खलता खलता समाखिलं नरचित्तं परिहाय खेलतु।
प्रतिवेशिसुखाभिलाषिता लसताल्लोकमनःसु सन्ततम्॥

भारतलक्ष्मीनाटकम्(१६६७)- इति झान्सीराज्ञीलक्ष्मीवाई-चरित्राधारिते राष्ट्रभक्तिसंवलिते नाटके राज्ञः उत्तरेण स्वमनोभावमित्थं वर्णयति राज्ञी- "देव! मन्त्रो मम वन्दे मातरमिति पञ्चाक्षरः, देवता चास्य जननी जन्मभूमिः, तद्भक्तिश्च रक्षाकवचमिति जानीहि।" एवमत्र नाट्यकारः सरलतरलभाषया देशभक्तपूर्णाया राज्ञ्या लक्ष्म्याः वीरचरित्रं वर्णयन् आत्मनं पुनाति, आधुनिकसंस्कृतनाट्यकारेषु स्वनाम अङ्कयति।

एवं वङ्गीयानां विपुले नाट्यसम्भारे विराजते काचिदभिनवा परम्परा। लघुप्रबन्धेनानेन तत् प्रदिपादयितुं न शक्यते। अतः हरिदाससिद्धान्तवागीश-श्रीजीवन्यायतीर्थ-यतीन्द्रविमलचौधुरी-रमाचौधुरी-गौरीधर्मपालादीनां विशिष्टानां नाट्यकाराणामेव नाट्यकृतिषु जानकीविक्रम-विराजसरोजिनी-माधुरीसुन्दर-धृतिसीत-शक्तिसारद-मुक्तिसारद-भारतलक्ष्मी-निवेदितानिवेदित-जननीत्यादिषु तिपादितं वस्तु किञ्चिदत्र आलोचयामः।

## 49. कर्पूरचरित' कर्पूरकवृत्त' भाणयोर्लास्याङ्गसौन्दर्यदर्शनम्

डॉ0 रामजियावनपाण्डेयः
पूर्वप्राचार्यः, अश्विनीपुरम्, फैजाबाद

परमात्मनः सृष्टौ कणे–कणे, पदे–पदे, जने–जने यत्र तत्र सर्वत्र रम्यं लावण्यं माधुर्यं सुरम्या – कला –लीला च दरीदृश्यत एव। लावण्यमयी लीला कला वै तस्य ब्राह्माण्डीया व्यवस्था – 'मधुराधिपतेरखिलं मधुरम्'

निखिलेऽखिले न केवलं मानवानामपितु सकलजीवजन्तूनां मधुराकृतिः, मधुरा प्रकृतिः गतिः कृतिर्दर्शनीया, मयूराकृतिर्नर्तनं, पक्वफलभरितावनिकायां कोकिलकूजनं शाखामृगाणामटकेलयः कलासौन्दर्यपराकाष्ठात्वेन मोहयन्ति, दर्शनाय तु नितान्तमपेक्षते सौन्दर्यकलादृष्टिरवबोधो वा, सहजास्ति मानवप्रकृतिर्प्रवृत्तिस्तु कलासौन्दर्यदर्शने कृतिष्वपि। मृग्यन्ति बुद्धिजीविनः सौन्दर्यमयीं कलामिति मत्वैव मयास्मिञ्छोध–पत्रे गवेष्य भाणयोर्वत्सराजकृतकर्पूरचरित डा0 रामजियावनपाण्डेयकृतकर्पूरकवृत्तयोर्ललित– ललितानि लावण्यमयानि दशविधलास्याङ्गानि तेषां विधानगतसौन्दर्यकलात्मकत्वं च द्रष्टुं चेष्टा कृता, समीक्षन्तु भवन्तः।

नाट्यलक्षणग्रन्थेषु 'दशरूपकादिषु' 'लस्' – संश्लेषणधातोर्निविहितस्य लास्यस्य संश्लेषणादङ्गहाराद्यैरूपशोभितस्य ललितलययुतस्य कैशिकीभूषितस्य दशविधं सूचीकृतम् –

गेयं पदं स्थितं पाठ्यमासीनं पुष्पगण्डिका।
प्रच्छेदकस्त्रिगूढञ्च सैन्धवाख्यं द्विगूढकम्।
उत्तमोत्तमकं चान्यदुक्तप्रयुक्तमेव च।
लास्ये दशविधं ह्येतदङ्गनिर्देशकल्पनम्।। दशरूपके 3/52–53

सम्प्रत्येतेषां कलासौन्दर्यात्मकं कमिकं दर्शनं गवेषणञ्च अधोलिखितान् बिन्दूनाश्रित्य शोधपत्रेऽस्मिन् कृतमस्ति। तद्यथा – गेयपदम्, स्थितपाठ्यम्, आसीनम्, पुष्पगण्डिका, प्रच्छेदकम्, त्रिगूढम्, सैन्धवम्, द्विगूढम्, उत्तमोत्तमकम्; उक्त–प्रत्युक्तम्,

एतदनुशीलनेन विशदीभवति यत्सौन्दर्यपिपासूना रसिकेन मनुजेन रम्यतमेषु काव्येषु नाट्येषु 'भाणादिषु' सुबहुतृप्त्यै निर्वृतये लावण्यमूर्तीनां सौन्दर्यातिशायिलास्याङ्गानां ललितमधुरं विधानं काङ्क्षितम्, फलतः 'भाण'–प्रणेतृभिः कविभिः यथाशक्यं यथाप्रसङ्गं तेषां योजना मन्येऽनिवार्यत्वेनाननिवार्यतयापि स्व वा स्व कृतिषु कृता। तद्यथालोच्यकविभ्यां विशेषेण समेषां दशविधलास्याङ्गानां समालोच्यभाणयो– वत्सराजकृत–कर्पूरचरित' डॉ0 रामजियावनपाण्डेयकृत – कर्पूरक–वृत्तयोः सुष्ठुनिर्वहणं विनियोजनञ्च प्रावीण्येन कृतं वै,सममेव स्व भाणलास्याङ्विधानवैदग्ध्यमपि सत्यापितमानुषङ्गिकतया। इत्थं भाणयोरुभयोः लास्याङ्गदृशा श्रेष्ठत्वं किं वादर्शत्वमपि साधितम्।

## 50. नीलाद्रिमहोदये श्रीजगन्नाथचेतनायां सौन्दर्यतत्त्व विमर्शः

डॉ0 सीतारामदास शास्त्री
युनिवरसिटी हाईस्कूल, उत्कल विश्वविद्यालय, उड़ीसा

नीलाचल निवासाय नित्याय परमात्मने
सुभद्राप्राणनाथाय जगन्नाथाय मंगलम्

पतितपावन पुरुषोत्तमस्य श्रीजगन्नाथस्य श्रीक्षेत्रस्य चेतनायाः सौन्दर्यस्य च महत्त्वं भारतीयेतिहासपुराणेषु बौद्धजातककथा परम्परायां लोककथायामुत्कलीय काव्यनाटकेषु कलास्थापत्येषु च निरवच्छिन्न प्रवाहरूपेण जीवनधारां धारय प्रवर्तते । उत्कलप्रान्तस्य आदिकविः शारलादासेन विरचितस्य आदिकाव्यं महाभारतस्य कथायां ब्रह्मदारुस्वरूपस्य श्रीजगन्नाथचेतनायाः सौन्दर्यस्वरूपं प्रतिष्ठितम् । श्रीजगन्नाथस्य सौन्दर्यदर्शनस्य तथा श्रीक्षेत्रपुरुषोत्तमस्य स्वतन्त्रसत्ता विभिन्नपुराणेषु अवलोक्यते । उत्कलीय श्रीजगन्नाथदासविरचितं भागवतं वैष्णवानां विशेषतः कृष्णोपासकानां कृते वेदतुल्यां मान्यतां भजते । तत्र श्रीजगन्नाथस्य पुरुषोत्तमस्य चेतनायाः सौन्दर्यस्य च व्यक्तमुपलभ्यते स्कन्दपुराणस्योत्कलखण्डे–गरुड़पुराण–पद्मपुराण कपिलसंहिता–वामदेवसंहिता–नीलाद्रिमहोदयादि ग्रन्थेषु श्रीजगन्नाथचेतनायाः सौन्दर्यस्य च वैशिष्ट्यं समुपवृंहितम्।

## 51. अन्या तु भारती काव्यसौन्दर्य्ये रसशाश्वती

प्रो0 शारदासामन्तरायः
आचार्या, साहित्यविभागः, श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, पुरी।

कविः क्रान्तदर्शी। तस्य भावनायाः परिप्रकाशिका भवति भाषा। इयं शब्दार्थसंवलिता। अतः सत्स्वपि बहुषु काव्यलक्षणेषु "शब्दार्थौ—" काव्यमति बहूनामलङ्कारिकाणां मतम्। एतौ शब्दार्थौ यदृच्छाप्रयुक्तौ न भवतः। अतः ध्वन्यालोके उक्तम्–

सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।।

प्रासङ्गिकयोः सहृदयहृदयाह्लादिनोः शब्दार्थयोः यथास्थानं सन्निवेशनं कवेः मुख्यं कर्म। यदि तत् कर्म सुचारुरूपेण सम्पादितं भवति तर्हि सर्वं काव्यं सुपाठ्यम्, सुन्दरं तथा हृदयाह्लादकं भवति।

यथार्थशब्दार्थयोः सन्निवेशनेन या भाषा काव्ये परिदृश्यते सा एव सौन्दर्य्यतत्त्वाख्यायिका इति कथ्यते। एतदर्थं महाकविकालिदासः स्वमहाकाव्य–रघुवंशस्य आदौ तयोः शब्दार्थयोः हि वन्दनं करोति तथा च तावेव शब्दार्थौ पार्वतीपरमेश्वराविव शाश्वतौ सुन्दरौ शुभ्रकरौ च भवतः इति प्रतिपादयति– यथा–

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।

विशेषलक्षणलक्षित–शब्दार्थसंवलिता भाषा यदा कविना काव्ये व्यवह्रियते तदा सा काव्यसौन्दर्याधायिका भवति ; यतः तया भाषया सर्वविधा काव्यगताः अर्थाः विशेषतः ध्वन्यर्थाः अवगन्तुं शक्यन्ते सहृदयैः। काव्यजगति शब्दस्य अर्थत्रयं प्रसिद्धम्। वाच्यार्थः, लक्ष्यार्थः तथा व्यङ्ग्यार्थः। पुनः तात्पर्यार्थोऽपि केषुचित्। यदा व्यङ्ग्यार्थः वाच्यार्थापेक्षया वा लक्ष्यार्थापेक्षया अधिकतया चमत्कारकारी भवति तदा ध्वनिः भवति। तादृशः अर्थः सर्वश्रेष्ठसौन्दर्य्याधायकः इति आलङ्कारिकैः प्रतिपादितम्।

नित्यनवीनत्वं सौन्दर्य्यतत्त्वस्य परिचायकम्। काव्ये यदा रससन्निवेशनं भवति तदा तदेव नवनवमिव प्रतिभाति। तदपि नावीन्यं कवेः नवनवोन्मेषशालिन्या प्रतिभया एव सम्भवति। इयमेव काव्ये व्यवहृता भाषा सौन्दर्य्याधायिका भवति।

## 52. अभिज्ञानशाकुन्तले सौन्दर्यम्

डॉ० रत्नमोहन झा
सहाकाचार्यः, दूरस्थशिक्षा, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

आदिकालादेव मानवेषु सौन्दर्यानुभूतिः वर्तते। शब्दविश्लेषणेन ज्ञायते यत् 'सुन्दरं रातीति सुन्दरम्। तस्य भावः सौन्दर्यम्'। यथा कर्तरि वस्त्रस्यान्तः प्रविशति तथैव सौन्दर्यमपि अस्माकं चित्तं/हृदयं प्रविशति। वस्तुतः सौन्दर्यस्य धर्मः भवति आकर्षणम्। इदं चाकर्षणम् लोके यत्र कुत्रापि यस्मिन् कस्मिन् येन केनापि रूपेण भवितुमर्हति। सौन्दर्यपरिशीलनस्य प्रकारद्वयं दृश्यते। तत्र प्रथमः भारतीयः अपरश्च पाश्चात्त्यः।

पाश्चात्त्यचिन्तानुसारेण अगोचरसौन्दर्ये किमपि परिवर्तनं नैव भवति। प्रतीयमानजगति यत् सौन्दर्यमवलोक्यते तस्य मूलमुत्सम् अस्मिन् चेतनजगति एव वर्तते। चेतनस्यैकत्वं प्रतीयमानस्य अनेकत्वमाध्यमेनैव प्रकाशितं भवति। यत्र अनेकत्वं चेतनस्य एकत्वम् अभिव्यनक्ति तत्रैव सौन्दर्यस्यानुभूतिर्भवति।

वैदिकसंहितासु यद्यपि स्वतन्त्रतया क्वापि सौन्दर्यसूक्तः नावलोक्यते तथापि सौन्दर्यस्य पर्यायपदानि बहूनि दृश्यन्ते। ऋग्वेदस्य ऋषयः आन्तरिकप्रेरणया शासितास्सन्तः सौन्दर्यस्य दर्शनं तस्याभिव्यक्तिं च कुर्वन्ति स्म। वैदिकी धार्मिकदृष्टिः अस्माकं जीवने विराजनुभूतिं जनयति। इयमेव परमानन्ददात्री सौन्दर्यानुभूतिः विद्यते। अनया सौन्दर्यानुभूत्या अस्माकं साधारणानुभवः रूपान्तरितो भवति। तथा च सर्वेष्वपि वस्तुषु दिव्यता आध्यात्मिकता च आविर्भवति। भारतीयसौन्दर्यचेतनायाम् इयमाध्यात्मिकी दृष्टिः वैदिककालादेव अविच्छिन्नतया समायाति।

कविकुलकुमुदकलाधरकविवरकालिदासस्य समाजः श्रुतिस्मृतिपरिपोषितः वर्तते। तस्मात् पुरुषार्थचतुष्टयस्य समत्वेन प्राप्तिः स्यादिति निरूपयति सः स्वीयरचनासु। अभिज्ञानशाकुन्तलं विश्वस्मिन् विश्वे सर्वश्रेष्ठं स्थानं बिभर्ति। प्राच्याः पाश्चात्त्याश्च सर्वेऽपि विद्वांसः एकस्वरेण नाटकमिदं प्रशंसन्ते।

सौन्दर्यं वस्तुतस्तु अनुभवस्य विषयो वर्तते। नाटकेस्मिन् कालिदासेन प्रस्तुतं सौन्दर्यं सहृदयैः त्रिधा अनुभूयते। तानि च वस्तुसौन्दर्यं भावसौन्दर्यम् अभिव्यक्तिसौन्दर्यं चेति। अनेन शोधपत्रमुखेन अभिज्ञानशाकुन्तलस्य सौन्दर्यं समुपस्थापयितुं कश्चन प्रयत्नः विधास्यते।

## 53. संस्कृतनाट्यसाहित्ये सौन्दर्यस्य विवेचनम्

डॉ० कन्हैया तिवारी
डी.ए.वी. शताब्दी पब्लिक स्कूल, सिवान, बिहार,
kanhayatiwary85@gmail.com,9708274044

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं रुद्रेणेदमुमाकृतव्यतिकरे स्वाङे विभक्तं द्विधा। त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते– नाट्यं भिन्नरुचिर्जनस्य बहुधाऽप्येकं समाराधनम्।। (कालिदासः)

काव्ये 'सुन्दरम्' इत्यनेन रम्यत्वं मनोज्ञत्वं हृद्यत्वं चाभीष्यते। किं नाम सुन्दरं सौन्दर्यं वा? बाह्यं सौन्दर्यं लोचनयुगलेन आभ्यन्तरं च सौन्दर्यं हृदयेन गृह्यते। किं नाम मधुरत्वं रम्यत्वं वा ? इति जिज्ञासायां माघेन निरूप्यते

– क्षणे–क्षणे यन्नवतामुपैति, तदेव रूपं रमणीयतायाः।

नाटकं संस्कृतसाहित्यस्य एकः गौरवपूर्णः अंगो वर्तते। नाटकैः एतत् साहित्यं तत् महत्त्वं प्रदानं कृतम् यत् एतस्य कीर्तिकौमुदी सम्पूर्ण संसारे विकसितः अस्ति। अयं ग्रन्थः भारतीयसाहित्यस्य सौन्दर्यं, कोमलकल्पनां, मनोहररसपरिपाकं संसारस्य मनीषिणां अग्रे अभिव्यक्तः कृतवान्। काव्यस्य अपेक्षा नाटकस्य प्रतिष्ठा सर्वदा अग्रे भवति। नाट्यकलाकौशले सौन्दर्यम्– नाट्यकला कौशले प्राधान्येनैते विशेषाः संलक्ष्यन्ते– घटनासंयोजने सौष्ठवम्, वर्णनानां सार्थकता, स्वाभाविकता ध्वन्यात्मकता च, चरित्रचित्रणे वैयक्तित्वं, रसानुगुणकवित्वधनम, रसपरिपाकश्चेति। अत्र सर्वत्र सौन्दर्यस्य विवेचनं वर्तते।

**रसपरिपाके सौन्दर्यम्–** प्रायः नाटके रसनिरूपणेऽपि महती विदग्धाऽवाप्यते। बीभत्सरसं विहाय प्रायः सर्वेऽपि रसा यथायथं विन्यस्ताः। शृंगाररसस्य पक्षद्वयं सम्भोग–विप्रलम्भात्मकं साम्येनात्र अवतिष्ठते। काव्यसौन्दर्यदृशा परीक्षितं चेत् शाकुन्तलं सर्वमेव शोभातिशायितम्। चतुर्थेऽङ्के श्लोकचतुष्टयं तु सर्वमनोभिरामम्। तत्र अन्तः प्रकृतेर्बाह्यप्रकृत्यां समन्वयो वर्ण्यते। पतिवियोगविषण्णा शकुन्तला, चन्द्रवियोगप्रपीडिता कुमुदिनी च नितरां साम्यं धत्ते।

**प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते' इत्याभाणकम् उद्दिश्य प्रयोजनमूलैव सर्वेषां प्रवृत्तिः**

काव्ये नाट्ये च सैव प्रवृत्तिः सुलभा। काव्यादेरध्ययनस्य किं प्रयोजनमिति जिज्ञासितं चेद् रसास्वाद आनन्दानुभूतिर्वा तत्प्रयोजनम्। काव्यं हि सुललितभाषानिबद्धत्वात् कल्पनाप्रचुरत्वाद् मनोभावाभिवयञ्जकत्वात् प्रसादमाधुर्यादिगुणसमन्वितत्वाद् अलंकारालंकृतत्वाद् रसप्रवाहपरीतत्वात् कलात्मकत्वाच्च सर्वेषामपि सुधियां चेतासि आवर्जयति। विविधकलाप्रख्यापनाद् रुचिरगुणालंकारसहितत्वाद् विद्वन्मनोमोहनत्वाच्च **'कलासीमा काव्यम्'** इति सादरम् उद्घोष्यते। यादृशी कल्पनामूला चेतःप्रसादिनी रुचिरा भावाभिव्यक्तिः काव्ये, न तथान्यत्र। अत एव कैश्चिद् निःसंकोचम् उदीर्यते यत् **'मेघे माघे गतं वयः'**। तत्र स्वानुभूतेः प्राकाश्येन विविधशास्त्रावगाहिज्ञानेन च सर्वांगीणत्वं जीवनोद्देश्यस्य साफल्यं च ।

संस्कृतवाङ्मये करुणरसवर्णने भवभूतेस्तदेव स्थानं यत् शृंगाररसवर्णने कालिदासस्य। नाटककृद् रूपेण द्वयोरेव प्रतिस्पर्धित्वम्। भवभूतौ बहिर्दृष्ट्यैव साकं सूक्ष्माऽन्तर्दृष्टिरपि लक्ष्यते। मानवीयमनोभावानाम् अन्तःस्थितेश्च यादृशं सुसूक्ष्मं मनोवैज्ञानिकं विश्लेषणं भवभूतिना प्रस्तूयते, तदन्यत्र सुदुर्लभम्। जगतो विनश्वरतां प्रेक्षं–प्रेक्षं भवभूतेः कारूण्याप्लुता रसधारा प्रसरति। स रामकथाम्, प्राधान्येन सीतापरित्यागम्, आश्रित्य स्वीयां भावनां मूर्तरूपेणोपस्थापयति। तस्य वाचि तादृग् वीर्यं यथा न केवलं वृक्ष–वनस्पत्यादयः, अपि तु पर्वत–रोदन–क्षमताऽपि तस्य वाचि दरीदृश्यते। नीरसोऽपि जनः उत्तररामचरितम् अधीत्य नूनं बाष्पाकुलेक्षणो भवितेति निश्चप्रचम्। अत्र सर्वेषु पदेषु रमणीयतायाः सौन्दर्यस्य च दृश्यं दृश्यते। संस्कृतनाट्यसाहित्ये सौन्दर्यस्य महत्ता दृश्यते। यत्र रसः, अलंकारः, छन्दः समन्वितं काव्यं विद्यते, तत्रैव सौन्दयस्य प्रचुरं वर्णनं प्राप्यते। भारतीय चित्रकलायां अपि सौन्दर्यं प्राप्यते। कलायाः सिद्धौ सौन्दर्यस्य समधिकं निवेशो हेतुर्भवति।।

## 54. नीतिशतकेऽलङ्कारसौन्दर्यविमर्शः

**प्रमोदिनी पण्डा**

पुरी

वैदिकवाङ्मयादारभ्यार्वाचीनसंस्कृतसाहित्यं यावन्नीतिमन्त्राः सुभाषितानि च सप्रसंङ्गं सावललीलं प्रपञ्चितानि सन्ति। **'सहनाववतु', 'स्वाध्यायान्मा प्रमदः', 'वसुधैवकुटुम्बकम्', 'विश्वं भवत्वेकनीडम्', सर्वे भवन्तु सुखिनः, 'सा मा शान्तिरेधि'** इति प्रसिद्धानि प्रचलितानि जनजनहृदयाह्लादीनि नैकानि सन्ति नीतिपरकाणि सुभाषितानि। **'अलंकारः सौन्दर्यम्' 'काव्यस्यात्मा ध्वनिः' 'वाक्यं रसात्मकं काव्यम्' 'रमणीयार्थप्रतिपादकशब्दः काव्य'**मिति लक्षणेष्वपि सौन्दर्यं विजृम्भति। **'क्षणे क्षणे यन्नवतामुपैति'** यत्काव्यचमत्कारत्वमभिनवत्वं च काव्ये प्रतिभाति, तत्सर्वं नीतिग्रन्थेषु पुष्पितानि सन्ति। नीतिग्रन्थेषु यद्यपि शुक्रनीति–कामन्दकी नीति–विदुरनीति–चाणक्यनीतिप्रभृतयो ग्रन्थाः सन्ति, तथापि भर्तृहरिप्रणीतं नीतिशतकं सर्वजनसंवादि हृदयसंवेदनशालि च भूत्वा पृथक् महत्त्वं धत्ते। नीतिशतकस्य श्लोकेषु वस्त्वलङ्काररसध्वनयः सम्यग् विलसन्ति। अपि च काव्यकलाकोविदो भर्तृहरिः समाजात्समजाच्चोदाहरणानि प्रस्तौति। प्रतिश्लोकमलङ्कारसौन्दर्यं सुतरां चकास्ति। अस्मिन् शोधनिबन्धे नीतिशतकेऽलङ्कारप्रयोगेषु यत्सौन्दर्यं कविना स्ववर्णनकुशलायामनुभवजन्याच्च प्रत्यपादि तत्सर्वं गुम्फयितुं यत्नः कृतो वर्तते।

## 55. आस्तिकदर्शनेषु सौन्दर्यदृष्टिः

**डा. श्रीमती पूर्णिमा केलकर**

सहायकप्राध्यापिका (संस्कृतम्), इन्दिराकलासंगीतविश्वविद्यालयः खैरागढ (छ.ग.) 9098128397

**रसो वै सः रसं ह्येवायं लब्ध्वाऽनन्दीभवति।** (तैत्तिरीयोपनिषदि 2.1.7) वेदाः भारतीय संस्कृतेः प्राणभूतं तत्वम्। वेदग्राह्यं वस्तुजातमेव स्वीकार्यम्। उपनिषत्सु आत्मोपलब्धिरेव मानवजीवनस्य स्वारस्यमिति मनीषिभिः प्रतिपादितम्। देहेऽस्मिन् पञ्च कोषाणामवस्थितिर्वर्तते। अन्नमय–प्राणमय–मनोमय–विज्ञानमय–आनन्दमयाश्च पञ्चकोषाः सन्ति। तत्र चरमस्योपलब्धिरेव मानवस्याभीष्टम्। तदर्थं नित्यं यतते

जनः। अस्मिन् कोषे विद्यमान आनन्द कथं प्राप्तव्य इति जिज्ञासायां उपनिषदामनुभववाक्यानि मार्ग प्रदर्शयन्ति। वस्तुतः अध्यात्मचिन्तनमेव भारतीयानां जीवन–दर्शनम्। अस्माकं मनीषिभिः सर्वत्रानुस्यूता दिव्यसत्तायाः साक्षात्कारः कृतः। एषा दिव्यानुभूतिरेव तेषां ब्रह्मसायुज्यम्, परमानन्दं वानुभावयति। अन्तःकरणजन्योऽयं रसानन्दः नेन्द्रियप्रभवो भवति। अयमेवात्मानन्दः प्राणिनामभिमतः। अध्यात्मशास्त्रेषु य ब्रह्मानन्दः, साहित्यशास्त्रे स एव रसपदेनाभिधीयते। भारतीयवाङ्मये चतुःषष्टिकलानां परिगणनं कृतम्। तत्र कलासु यत् सौन्दर्यतत्त्वमन्तर्निहितम् तद् विषये ऋषिभिः विविधप्रकारैः मीमांसितम्। पारलौकिकं सुखमाप्तुमेव जनाः नित्यं प्रयतन्ते। भारतीयवाङ्मये कलानामुद्भावनमपि जीवनस्य परमं लक्ष्यमासादयितुं सञ्जातम्। नात्र ऐहिकसुखस्य विश्रान्तिरस्ति। अतएवोच्यते–

विश्रान्तिर्यत्र सम्भोगे सा कला न कला मता।
लीयते परमानन्दे ययात्मा सा परा कला।

अस्मिन् विषये पाश्चात्यदार्शनिकः गेटे महोदयः ब्रूते– यस्या कस्यापि वस्तुनः चरमोत्कर्षस्थितिरेव विकासो वा परमसौन्दर्यं जनयति। **" Art is beautiful when it has reached the hieght of its natural development "**

किं नाम सौन्दर्यमिति विषये भारतीयानां दृष्टिरपि एवमेव लक्ष्यीकरोति। साहित्यकारैः अभिनवगुप्तादिभिः रसनिष्पत्तिविषये यत् प्रतिपादितम् तदनुगतमेव दार्शनिकानामपि चिन्तनं दृश्यते। अभिनवगुप्तपादाचार्यमहोदयेन 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इत्यत्र प्रत्यक्षं रस शब्देनैव स्वाभिप्रायः प्रकाशितः। अत्र हि रसो हि ब्रह्मानन्द सहोदर इत्युच्यते। पण्डितराज जगन्नाथ महोदयैः रमणीयार्थप्रतिपादकः शब्दः काव्यमिति वदता सौन्दर्यस्य पर्यायभूतं रामणीयकमिति व्यवहृतम्। अन्यैः काव्यशास्त्रिभिः सौन्दर्यमलंकारः, चमत्कृतिरलंकारः इत्यादिभिर्वचनैः सौन्दर्यं परिभाषितम्। इदमेवात्र तात्पर्यं यत् सौन्दर्यं हि अन्तःकरणस्य सा मधुमती भूमिः यत्र स्थित्वा जनः न किमप्यन्यदाकांक्षते , स्पृहयति, वाञ्छति वा। सैषा ब्राह्मी स्थितिः, यत्र गत्वा सर्व विमुच्यते। इदानीमिदमनुसन्धेयम् यत् संगीतशास्त्रे स्वरतालसमन्वितं जनरंजकं गीतं गानसौन्दर्यमुत्पादयति। अत एवोक्तम्–

ध्वनिविशेषस्तु स्वरवर्णविभूषितः।
रंजको जनचित्तानां स रागः कथ्यते बुधैः।

यद् हृदयमाह्लादयति, संवेदनां स्फोरयति, मनसि किमपि तोषं जनयति तत् संगीतशास्त्रस्य सौन्दर्यमभिधीयते। आचार्यरूपगोस्वामी–'अंगप्रत्यंगानां सम्यक्सन्निवेश एव सौन्दर्यं जनयतीति' प्रतिपादयति। तदुक्तम्– अंगप्रत्यंगकानां यः सन्निवेशः, सुश्लिष्टः सानुबन्धः तत् सौन्दर्यमितीर्यते। (उज्वलनीलमणिग्रन्थे) अलंकारशास्त्रे साहित्यशास्त्रे वा ध्वन्यालोककार आनन्दवर्धनाचार्यः काव्यानन्दमनिर्वचनीयं शब्दातीतमिति मत्वा स्वानुभवगम्यं हि तदिति ब्रूते। तदुक्तम्–

प्रतीयमानं पुनरन्यदेव वस्त्वस्तु वाणीषु महाकवीनाम्।
यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु। (ध्वन्यालोके)

परमसुन्दरीणां लावण्यं यथा अनुभवस्यैव विषयो भवति तथैव काव्यानन्दोऽपि स्वानुभवगम्य एव। इदानीं प्रस्तुते निबन्धे दर्शनशास्त्रे सौन्दर्यविषयिणी दृष्टिः इति विषये स्वकीयविचारान् प्रकटयितुं प्रयतते। वेदादिकमारभ्य उपनिषदादिषु वाङ्मयेषु सौन्दर्यविषये ऋषिभिः गभीरं चिन्तनं कृतम्। तत्र सर्वत्र समष्टिविषये चिन्ता क्रियते। विश्वस्मिन् एकस्यैव चिदात्मकब्रह्मणः व्याप्तत्वात् जीवानां कथं कल्याणं स्यादिति आत्मस्वरूपस्य ज्ञानं कथं सम्भवेतदिति विषये बहुधा बहुभिः विमृश्यते। स एव आनन्दात्मकः परमात्मा कदाचित् रसशब्देन, कदाचित् आनन्दशब्देन, क्वचिच्च ब्रह्मानन्दपदेनाभिधीयते। उपनिषत्सु प्रतिपादितं सौन्दर्यम्, तल्लक्षणं च, अन्यत्र शास्त्रेषु प्रतिपादितलक्षणानि नातिरिच्यन्ते। एकमेवानुभूतिगम्यं रहस्यं विविधैः पदैः प्रतिपाद्यते। वेदान्तदर्शनेषु आनन्दस्वरूपब्रह्मणः व्याख्यानावसरे सामान्यतः सर्वेषां सर्वदा कथं न ब्रह्मणः साक्षात्कारो भवतीति जिज्ञासिते ग्रन्थकारः दृष्टान्तमाध्यमेन स्फुटीकरोति–

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः।
तथाबद्धवद् भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा। (वेदान्तसारे)

स्वयं प्रकाशितः सच्चिदानन्दमयस्वरूपः आत्मा आवरण शक्त्या पिहितः। अतः प्रमाता न आनन्दात्मनः साक्षात्कारं कर्तुं शक्नोति। यथा स्वल्पोऽपि पयोदखण्डः आदित्यमण्डलमाच्छाद्य तमादित्यं दृष्टिगोचरतां न करोति। सौन्दर्यस्यानुभूतिमार्गे आवरणशक्तिरप्यवरोधं जनयति। अन्या विक्षेपात्मिका शक्तिरपि ब्रह्मसाक्षात्कारमवरुणद्धि। अज्ञानेन यथा रज्जौ सर्पभ्रमो भवति। तेन वास्तविकं सर्पज्ञानं तिरोहितं भवति। तथैव विक्षेप शक्त्या ब्रह्मरूपात्मकमखिलं जगत् सांसारिकबुद्ध्या अन्यथैव मन्यते लोके। परमसत्यस्याधिगमः ब्रह्मानन्दानुभूतिर्वा अनेन शक्तिद्वयेन प्रतिहन्यते। सांख्यदर्शनेऽपि प्राणिनां मोक्षार्थे एव प्रवृत्तिर्भवतीत्युक्तम्।तत्र प्रकृतिपुरुषयोर्मध्ये पुरुषसिद्धिमन्तरेण न मोक्ष प्राप्तिः कैवल्यं वा संभवति। पुरुषसिद्धिः कथं स्यादिति विषये सांख्याचार्यः दृष्टान्तमेकं प्रस्तौतिः –

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथाप्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः। (सांख्यकारिकायाम्)

कारणात्मिकेयं प्रकृतिः पुरुषस्य मोक्षार्थं यतते।लोके अंधपङ्गु न्यायेन प्रकृतिपुरुषयोः सहयोगेनैव सर्व प्रचलति। लोके यथा काचिन्नर्तकी स्वकीयं नृत्यं दर्शयित्वा प्रतिनिवर्तते। तथैवेयं प्रकृतिः स्वकीयं स्वरूपं अचेतनभूतं प्रतिपाद्य स्वव्यापारान्निवर्तते। तदुक्तम्–

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः। (सांख्यकारिकायाम्)

सारतोऽयमर्थः यत् सौन्दर्यं हि आत्मनिष्ठमेव। वस्तुजातं सौन्दर्यं तु सापेक्षं वर्तते। तत्तु मनुजस्य संवेदनामाश्रयति। मनोनुकूलतायां सर्वमपि सुखयति। प्रतिकूले मनसि मधुरमपि सर्वं दुःखमेव जनयति।अतः आनन्दात्मिका वृत्तिः वस्तुजन्यापि मनस्येव प्रतिष्ठिता वर्तते। सत्यमुक्तम्–

दधि मधुरं मधु मधुरं द्राक्षा मधुरा सितापि मधुरैव
तस्य तदेव हि मधुरं यस्मिन् यस्य मनोनुलग्नं हि।

## 1. योगदर्शन में कला एवं सौन्दर्य : एक शाश्वत अभिव्यक्ति

**प्रो0 विमला कर्णाटक**
प्रोफेसर, संस्कृत विभाग, महिला महाविद्यालय, का.हि.वि.वि

'कला' (कल्+कच् टाप्) शब्द आकलित समय का प्रभाग, किसी तत्त्व का लवमात्र, किसी कोटि का अंश, किसी प्रयोग की अभिव्यक्ति, किसी कला की प्रयोगात्मक कुशल परिणति आदि नानाविध अर्थों की कलात्मक प्रस्तुति का वाचकभूत पद है। 'सौन्दर्य' सौन्दर्य किसी कला का वह आकुलित प्रकोष्ठ है, जो सौन्दर्याभिव्यक्ति का चरम निदर्शन है। अतः कला और सौन्दर्य का अविनाभावसम्बन्ध से निदर्शित आयाम ही तत्–तत् शास्त्रों की गङ्गोत्री है। जिससे वेद–वैदिक, दर्शन–दार्शनिक, साहित्य–साहित्यिक, शब्द–शाब्दिक, धर्म–धार्मिक, कर्म–कार्मिक, युद्ध–यौद्धिक, जगत्–जागतिक आदि अनेक शब्दमयी विधाएँ उद्भूत हुई हैं। ये भिन्न–भिन्न 'शाश्वत अभिव्यक्ति' के उद्गमभूत आकर ग्रन्थ हैं। संस्कृतवाङ्मय के किसी भी विधा की लेखनशैली तत्–तत् ग्रन्थकारों के बौद्धिक कलात्मक सौन्दर्य से परिवेष्टित रहती है। कोई भी मानक ग्रन्थ सत्य– शिव– सुन्दर के त्रिकोणात्मक बिन्दुओं पर अवलम्बित रहकर ग्रन्थकार के कथ्य को प्रकाशित करता हुआ लोक मंगलमय कामना के रूप में प्रतिध्वनित होता है। योगदर्शन के कलात्मक सौन्दर्य का निदर्शन पतञ्जलि के योगश्चित्तवृत्तिनिरोधः सूत्र से आरम्भ होकर ग्रन्थ के अन्तिम सूत्र के अन्तिम पद चितिशक्ति में पर्यवसित होता है। जिसका सुष्ठु विवेचन सम्पूर्ण पत्र में विवेचित किया जाएगा।

## 2. काव्यकला के चित्रात्मक प्रभेद : प्रहेलिका, समस्यापूर्ति एवं कूटकाव्य

**प्रो0 मनुलता शर्मा**
संस्कृतविभाग, कलासंकाय, काशीहिन्दूविश्वविद्यालय

कला की व्यापक परिधि में परिगणित काव्यकला एक ऐसी कला विधा है, जिसका प्रभाव युगान्त–पर्यवसायी होता है। यह एक ऐसी विधा है जिसका निर्माण शक्ति, व्युत्पत्ति, एवं तज्जन्य अभ्यास से एवं परिष्कार की उत्तरोत्तर साधना से हुआ करता है। इसके अनेकानेक प्रभेद हैं। इनमें चित्रकाव्य एक ऐसा प्रभेद विशेष है; जिसमें व्युत्पत्ति एवं बुद्धिवैशद्य की प्रौढ़ि अत्यावश्यक है। अमरकोष के अनुसार चित्र शब्द का प्रयोग सामान्यतः आश्चर्य एवं आलेख्य इन दो अर्थों में होता है– **'आश्चर्यालेख्ययोश्चित्रम्'** (अमरकोश 3/3/178)। आचार्यों ने चित्रकाव्य के सन्दर्भ में इन दोनों ही अर्थों में किसी एक अथवा दोनों को एक स्थान पर स्वीकार किया है। 'आलेख्य' अर्थात् आकृति की निर्मिति; इस अर्थविशेष को स्वीकार करने वाले आचार्यों में आनन्दवर्धन, अभिनवगुप्त, रुय्यक, जयदेव, मम्मट, विद्यानाथ, विश्वनाथ, अप्पयदीक्षित आदि प्रमुख हैं; जबकि इसके आलेख्य एवं आश्चर्य उभयविध अर्थ को ग्रहण करने वाले आचार्यों में दण्डी, रुद्रट, अग्निपुराणकार, भोज, विद्याधर आदि प्रमुख हैं। चित्रालङ्कार के पारिभाषिक स्वरूप के सन्दर्भ में रुद्रट का लक्षण विशेषतः दर्शनीय है। उनके अनुसार– **'भङ्ग्यन्तरकृततत्क्रम–वर्णनिमित्तानि वस्तुरूपाणि,'। 'साङ्कानि विचित्राणि च रच्यन्ते यत्र तच्चित्रम्'** (काव्या0 5/1)। इसी कारिका पर नमिसाधु की टीका है–**'यत्र काव्ये वस्तूनां चक्रादीनां रूपाणि संस्थानानि रच्यन्ते निबध्यन्ते तच्चित्रसादृश्यादाश्चर्याद् वा चित्रं नामालङ्कारः'**। अर्थात् वर्णों को क्रमविशेष में रखने से कमल आदि कोई आलेख्य बन जाए अथवा चित्र न बनने पर भी अक्षर पंक्तियों के विशिष्ट क्रम से असामान्यता लक्षित होने से द्रष्टा या अध्येता को आश्चर्य हो उठे, उसे चित्रालङ्कार कहते हैं। इसी तथ्य की अभिव्यक्ति एकावलीकार के शब्दों में दर्शनीय है– **''अहो येन क्रमेण गता वर्णपङ्क्तिः तेनैव क्रमेण प्रत्यागतेत्याश्चर्यकारित्वाद वा चित्रम् ''** (एका0 7/16)।

आश्चर्य के अर्थ को छोड़कर आलेख्य अर्थ पर विशेष बल देने वाले आचार्यों में आनन्दवर्धन सर्वप्रथम हैं। उन्होंने इसकी आश्चर्यार्थकता को छोड़कर आलेख्यार्थकता पर विशेष बल दिया– **'केवलवाच्यवाचक–वैचित्र्यमात्राश्रयेण उपनिबद्धालेख्यप्रख्यं यदा भासते तच्चित्रम्'** (ध्वन्या0 (3/43 वृत्ति)। इस पर अभिनवगुप्त की लोचन टीका की पङ्क्तियों से तात्पर्य और स्पष्ट हो जाता है–**'यमकचक्रबन्धादि चित्रतया प्रसिद्धमेव तत्तुल्यार्थमेवार्थचित्रं मन्तव्यमिति भावः। आलेख्यप्रख्यमिति रसादिजीवरहितं मुख्यप्रतिकृतिरूपं चेत्यर्थः'**।

आलेख्य अर्थ में चित्रकाव्य के अनेक प्रभेद हैं; यथा– खड्गबन्ध, धनुर्बन्ध, बाणबन्ध, मुरजबन्ध, चक्रबन्ध, शक्तिबन्ध, तोमरबन्ध, तुरङ्गबन्ध, विविडितबन्ध, अर्धभ्रम, सर्वतोभद्र, व्योमबन्ध, गोमूत्रिकाबन्ध, चतुर्दलपद्मबन्ध, अष्टदलपद्मबन्ध, षोडशदलपद्मबन्ध आदि एवं आश्चर्य अर्थ में इसके प्रभेद हैं–समस्यापूर्ति, प्रहेलिका, कूटपद्य, अपह्नुति, वाकोवाक्य, क्रियागुप्त, कर्तृगुप्त, कर्मगुप्त, करणगुप्त, सम्प्रदानगुप्त, अपादानगुप्त, सम्बन्धगुप्त, अधिकरणगुप्त, सन्धिगुप्त, समासगुप्त, मात्राच्युतक, बिन्दुच्युतक, विसर्ग, अक्षर, स्थान, व्यञ्जनगुप्त, च्युतदत्ताक्षर, भाषाचित्र, गतिचित्र, श्लोकान्तर एवं यमक तथा श्लेष के विविध प्रभेद। इन आश्चर्यात्मक चित्रकाव्यों का उल्लेख

आचार्य वात्स्यायन ने कामसूत्र के तृतीय अध्याय एवं तृतीय प्रकरण में चौंसठ कामकलाओं के अन्तर्गत किया है। उन्होंने इसे नागरिक दिनचर्या के क्रम में पाँच प्रकार के विनोदों में भी गिना है। (कामसूत्र 4/4)

मनोविनोद की यही कला जब काव्यशास्त्रियों के विवेचन का विषय बनी तो उसके स्वरूप एवं भेद–प्रभेद पर पर्याप्त चिन्तन मनन हुआ एवं उसे शब्दालङ्कारों में परिगण्य चित्रालङ्कार का भेद माना गया।

प्रस्तुत शोधपत्र में चित्रकाव्यकला अथवा कामकला के प्रभेद समस्यापूर्ति, प्रहेलिका, एवं कूटकाव्य के स्वरूप का सोदाहरण विवेचन किया गया है।

## 3. यज्ञीयसौन्दर्यवितान के ऋग्वेदीय सन्दर्भ

**आनन्द कुमार श्रीवास्तव**
प्रोफेसर, संस्कृतविभाग, कलासंकाय, काशीहिन्दूविश्वविद्यालय, वाराणसी

भारतीय वाङ्मय में धार्मिक कार्यों से सम्बन्धित प्रयोगों के लिए प्रचलित महत्त्वपूर्ण शब्द है– यज्ञ (यागादिरेव धर्मः)। यह यज् धातु से निष्पन्न है। यज् धातु के अनेकार्थक होने के कारण यह शब्द अपने से जुड़े हुए अनेक अर्थों और उसके विकास की प्रक्रियाओं के रूप में ब्रह्माण्ड में है। उस विकास को यज्ञ रूप में पृथिवी पर देखा जा सकता है। अतः यज्ञ की मूल अवधारणा परम सत्य या ऋत के साथ जुड़ी है।

यज्ञ के सन्दर्भ में ऋग्वेद का अनुशीलन करने पर स्पष्ट हो जाता है कि वैदिक ऋषि यज्ञ को सम्पूर्ण सृष्टि का केन्द्र मानते हैं– अयं यज्ञो भुवनस्य नाभिः।

ऋग्वेद के प्रथम मन्त्र में ही अग्नि की स्तुति के सन्दर्भ में यज्ञ का उल्लेख प्राप्त होता है, जिसमें अग्नि को श्रेष्ठ पुरोहित, ऋत्विक्, यज्ञ का देवता, देवों का आवाहनकर्त्ता तथा श्रेष्ठ रत्नों का प्रदाता बतलाया गया है।

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्।

ऋग्वेदीय पञ्चम मंडल में यजमान द्वारा अग्नि से हवि को देवताओं तक पहुँचाने की प्रार्थना प्राप्त होती है– इह देवान् हविरद्याय वक्षि।

ऋग्वेद के दशम मंडल के 90वें सूक्त में परम पुरुष के द्वारा यज्ञ द्वारा सृष्टि निर्माण की प्रक्रिया का उल्लेख है। इस सूक्त में ऋषि ने सम्पूर्ण ब्रह्माण्ड को यज्ञमय माना है तथा बताया है कि विराट पुरुष ने यज्ञ में अपने को अर्पित कर अनेक रूपों में प्रकट किया है– यत्पुरुषेण हविषा देवा यज्ञमतन्वत।

इसी सूक्त की अन्तिम ऋचा में बतलाया गया है कि देवों ने यज्ञ के द्वारा ही यज्ञ का यजन किया और उसकी महिमा स्वर्ग को प्राप्त हुई तथा यह सृष्टि का प्रथम कर्म था।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।

ऋग्वेद के दशम मण्डल के ही हिरण्यगर्भ सूक्त (10.12) तथा वाक्सूक्त (10.125) में यज्ञ की अवधारणा का परिचय मिलता है, किन्तु उसका स्पष्ट चित्रण पुरुष सूक्त में प्राप्त होता है।

ऋग्वेद में यज्ञ सम्बन्धी अनेक उल्लेख इसके प्रमाण है कि उस काल में यज्ञ संस्था पर्याप्त विकसित हो चुकी थी। यज्ञ के अध्वर, मख, मेध, क्रतु और सप्ततन्तु आदि पर्याय इस पूर्ण विकसित यज्ञ संस्था के द्योतक हैं। (ऋ0 –1.1.4, 1.6.8, 2.2.5, 4.10.1, 6.42.3, 10.11.6, 10.52.04)। ऋग्वेद में पोता, होता, नेष्टा, अग्निदूत, अध्वरी और गृहपति रुप में अग्नि को सम्बोधित किया गया है।

त्वाग्ने होत्रं पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः।
त्व प्रशास्त्रं त्वमध्वरीयसी ब्रह्माचासि गृहपतिश्च नो दमे।।

यजुर्वेद में यज्ञ शरीर के विनिर्माण का परिचायक भी ऋग्वेद है। इस सन्दर्भ में यह ऋचा द्रष्टव्य है–

ऋचां त्वः पोषमास्ते पुपुष्वान्।

अर्थात् यजुर्वेद यज्ञ का भावन करता है। ऋग्वेद और सामवेद यज्ञ में आहूत देवों की प्रसन्नता के लिए शस्त्र और स्तोत्र बतलाते हैं तथा अथर्ववेद यज्ञ में अनुशासन का पालन करवाता है। ऋग्वेद में उल्लिखित यज्ञ संस्था के स्वरूप का पर्याप्त विकास हमें ऋग्वेदीय ब्राह्मणों में दिखाई पड़ता है।

## 4. आचार्य जगन्नाथपाठक की 'सौन्दर्यकारिका' में विवेचित कला एवं सौन्दर्यतत्त्व

**प्रो0 बनमाली बिश्वाल**
श्री गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलहाबाद

सर्जना एवं आलोचना उभय क्षेत्र में आचार्य जगन्नाथ पाठक एक जाने–माने हस्ताक्षर हैं। उन्होंने काव्य और काव्यशास्त्र दोनों ही लिखे हैं। 102 कारिका–विशिष्ट अपनी सौन्दर्यकारिका (1991) में उन्होंने सृष्टि को सौन्दर्यमयी माना है और सौन्दर्य के अनेक पर्यायों (लावण्य, माधुर्य, चारुत्व, सुरूप) का उल्लेख किया है। उन्होंने

सौन्दर्य का त्रिविधत्व स्वीकारा है– वस्तुगत, भावगत और अभिव्यक्तिगत। कुछ पाश्चात्य विचारक इन्द्रिय–संवेदना को और कुछ भारतीय विचारक अङ्गों के सन्निवेश को ही सौन्दर्य मानते हैं। पर डॉ. पाठकजी का मानना है कि ये दोनों ही समग्रता के साथ सौन्दर्य को परिभाषित नहीं कर पाते हैं। उनके अनुसार माघ के वाक्य (क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः) को सौन्दर्य–शास्त्र का महावाक्य माना जा सकता है।

आधुनिक चिन्तक सौन्दर्य को ही काव्य–आस्वाद का सर्वस्व मानते हैं। वे आभ्यन्तर–सौन्दर्य को वस्तुतः ईश्वर से अभिन्न मानते हैं। जो सुन्दर है वही शिव है, जो शिव है वही सत्य है। पर यहाँ आधुनिक विद्वानों में मतभेद है। जिनके चित्त में सौन्दर्य की स्फूर्ति होती है उन्हें आचार्य अभिनव गुप्त ने सहृदय कहा है। सत्त्वगुण की अधिकता होने पर सौन्दर्य समुल्लसित होता है। आत्मा में अभिव्यक्त होने पर सौन्दर्य को बाह्य–अलङ्करणों की अपेक्षा नहीं होती। सौन्दर्य के अतिरिक्त किसी और की साधना करने वाले कवि या कलाकार कवित्व अथवा कलानैपुण्य को प्राप्त नहीं कर पाते हैं। कवि को चित्रकारी एवं संगीत में भी सौन्दर्यबोध का आधार दिखता है।

सौन्दर्य को स्पर्श करनेवाली दृष्टि किसी को दुःखी नहीं कर सकती। वह प्रीति का विस्तार करती है। सौन्दर्य में चुम्बकत्व–शक्ति है। डा. पाठक जी मानते हैं कि सौन्दर्य के बिना यह जगत् रमणीय नहीं है, जैसे नमक के बिना भोजन सुस्वादु नहीं होता है।

किसी वस्तु की अवधारणा दो रूपों में होती है– इदमीदृशम्, इदमेतावत् स। परन्तु सौन्दर्य–विषय में यह अवधारणा सम्भव नहीं है। इस शोध–पत्र में आचार्य पाठकजी की सौन्दर्य–विषयक अवधारणा पर विचार किया जायेगा।

## 5. चिन्तनप्रस्थानों के अभिमतार्थनिर्वृत्ति में चित्रकला तथा मूर्तिकला की भूमिका

प्रो. सोमनाथ नेने
संस्कृतविभाग, कलासंकाय, काशीहिन्दूविश्वविद्यालय

भारतीय चिन्तन में परमानन्द की निर्वृत्ति तथा दुःखापगम रूपी प्रयोजन ने सम्पूर्ण दार्शनिक जगत् में देश, काल तथा स्थान की परिधि को आक्रान्त करके अपनी सत्ता स्थापित की है। जब से मानव ने जीवन के लक्ष्य पर विचार करना प्रारम्भ किया तभी से इन दोनों पक्षों में से किसी एक लक्ष्य को उसने अवश्य ही अपने जीवन के परम प्रयोजन के रूप में स्वीकार किया है। विवेचनीय कलातत्त्व ने अपने रूढ़ तथा पारिभाषिक रूप दोनों अर्थों द्वारा सौन्दर्य का प्रकाशन करते हुए विवेचित उभयविध दार्शनिक प्रयोजन की निर्वृत्ति में अपनी चरमसाधनता को प्रकाशित किया है।

भारतीय परम्परा में कलाओं की 64 संख्या प्रसिद्ध है। शब्दकल्पद्रुम में शैवतन्त्रोक्त इन्हीं 64 कलाओं में आलेख्यम् शब्द से 5वीं कला कें रूप में आलेख कला का उल्लेख किया गया है। है। जिसका अर्थ रंगने से है अर्थात् चित्रकला को हम आलेख कह सकते हैं क्योंकि शब्दकल्पद्रुम में चित्र शब्द के पर्यायवाची शब्द के रूप में आलेख शब्द का स्पष्ट रूप से संयोजन किया गया है। इसी प्रकार, 37वीं कला के रूप में वास्तुविकता का उल्लेख किया गया है। शब्दकल्पद्रुम, भाग 05 के पृष्ठ 78 पर शिल्प शब्द के आगे **शिल्पं कलादिकं कर्म्म**, ऐसा लिखा गया है। कला शब्द से 64 कलाओं का उल्लेख करके आदि पद के अर्थ के रूप में **स्वर्णकारादिकारकर्म ग्रहः**, ऐसा लिखा गया है। इस अंश में विद्यमान आदि शब्द, लोक में कला के रूप में प्रसिद्ध सभी अनुल्लिखित विषयों का भी उपलक्षक है अतः सभी प्रकार की कलाएँ इन्हीं 64 में अन्तर्भूत हो जाती हैं।
इन्हीं कलाओं में अन्तर्निहित यद्यपि लगभग सभी कलाओं की दार्शनिक अवबोध के प्रकाशन में एक सुनिश्चित भूमिका है तथापि चित्रकला तथा मूर्तिकला के दार्शनिक अवदान के प्रकाशन तक ही प्रस्तुत आलेख की सीमा निर्धारित की गई है।

## 6. साहित्य में चित्रकला की भूमिका : एक प्रयोजनपरक दृष्टि

डॉ. विभारानी दुबे
प्रोफेसर, संस्कृत अनुभाग, महिला महाविद्यालय, काशी हिन्दू विश्वविद्यालय

जब ऋग्वेद का ऋषि इस सम्पूर्ण सृष्टि को देव के काव्य के रूप में आख्यायित करता है– **"पश्य देवस्य काव्यं न ममार न जीर्यति"**। यहाँ सृष्टि रचना को काव्य कहने में निश्चित रूप से उसका अभिप्राय सृष्टि के व्यापक छन्द से होगा; जहाँ एक सन्तुलन, सामंजस्य, अनुकूलन की व्यापक अवधारणा सन्निहित है। यह छन्द जब भंग होता है, टूटता है तो सृष्टि की विनाशलीलायें दृष्टिगत होती हैं। कला आत्मा का संस्कार करती है और व्यक्ति को छन्दोमय बनाती है– **आत्मसंस्कृतिर्वावशिल्पानि, छन्दोमयं वा एतैर्यजमान आत्मनं संस्कुरुते।**

इस आत्मसंस्कार और छन्दोमयता को जीवन में लाने के लिये कलाओं की महती भूमिका दृष्टिगत होती है। किसी समय जब मनुष्य ने पशु रूप से (प्राण और मनोमयस्वरूप से युक्त हो) मनुष्य (विवेक) की ओर अभिगमन किया था तो उसका चरम गन्तव्य देवत्व की अवाप्ति था (सत् चित् आनन्दमय रूप की सिद्धि), जो

